च०आ
ल०भा
१

अतिशयेन प्रसिद्धं

ॐ श्रीगणेशाय नमः नमामि विघ्नराशीनां हन्तारं ज्ञानकीयुतं राघवं यः प्रथमऽतो भूत्यै भवतु सोऽचिरात् १ ॐ गोपिकावल्लभं नत्वा गिरं भट्टोजि
दीक्षितं विभक्तीर्देशावक्षेहं मुनित्रयमताश्रयः १ स्यादयः कथिताः पूर्वं स्त्रीसामासिकतद्धिताः आख्याताः प्रथक् कथ्यन्ते त्रिसप्तङ् यङ्लुगादयः।
२ अधिकारोयं प्राङ् नाम्नोपद इत्यतः स्यादेतत् किमर्थोऽयमधिकारः न तावन्नामव्यावृत्त्यर्थः स्यादिभिरेव बाधात् तक्रकौण्डिन्यन्यायेन तेषां वि
शेषविधानात् यत् औपगवः पचति रूपमित्यादौ विभक्त्यन्तस्यापि प्रकृतित्वात् तथा च लुक् सूत्रे प्रत्ययग्रहणं उपपद्यते तदेवं प्रकृत्यन्तरव्यवच्छे
दार्थं अवश्यं धातुः प्रकृतिर्वक्तव्येति माधवेनोक्तं तन्न प्रकृत्यर्थस्य प्रत्ययार्थस्य चानन्वयात् तथा हि प्रकृत्यर्थो हि द्रव्यं कारकं च आख्यातार्थश्च
कर्तृकर्मणी तयोर्ह्यन्वयो नास्ति कारकाणां क्रिययैवाऽन्वयनियमात् दृष्टांते हि प्रकृत्यर्थप्रत्ययार्थयोः संबंधबोधिका विभक्तिः श्रुमायामपित

॥ श्रीगणेशाय नमः ॥ धातोः ॥ १ ॥

स्यां शिष्यमाणेन तदर्थबोधनं वृत्तित्वाच्च शक्यं तत्कल्पनं च भवति तिवाद्यं ते च न तथेति सिवंतव्यावृत्तिर्नैफलं अत एव तिवाद्यंतव्यावृत्तिरपि न
पचतीत्यत्रैकेन तिपा एकाश्रयिकायां क्रियायां बोधितायामपरेणान्याश्रयायाः क्रियायाः बोधनस्याशक्यत्वात् प्रथमेनैव संख्याकारकादेरभिहित
त्वेन द्वितीयस्य प्रयोगाप्रसंगाच्च प्रथमस्य समासप्रत्यययो रितिलोपे तु तदर्थस्यानवबोधाच्च कर्तृद्व्यादिप्रतिपिपादयिषायां तु पचत इत्यादेरेव
प्रयोगस्य युक्तत्वात् अतस्तिवंतव्यावृत्तिरपि न फलं यद्यपि किंचाधिकारार्थमपि धातोर्यथा स्यात् धातूपसर्गसमुदायस्य मा भूत् प्रकर्तुमिच्छतीति
माधवेनोक्तं तदपि न चुरादौ संग्रामङ् युद्ध इति विशिष्टपाठेन धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते उपसर्गसमानाकारपूर्वपदं पृथक् क्रियत इति ज्ञा
पितेन गतार्थत्वात् अन्यथा स्वमनायत उदमनायत प्रापीपचत् प्राटीटत् इत्यादौ दोषस्य दुर्वारत्वात् तज्ज्ञापकमित्थं वर्णनीयं सोपसर्गाच्चेत्प्रत्ययस्त्व

१

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिंसंग्रामङ.एवेति एवंव्यर्थोधिकारइतिचेत् उच्यते ऊरीकरोति शुक्लीभवतिसहायीस्यात् इत्यादौ ऊर्यादिच्व्यंतयोर्धात्वोः प्राक्प्रयोगस्यनियतत्वेन
विशिष्टात्मस्वयोस्तत्तिर्दुर्वारा तथाचाङ्द्विर्त्वयोर्दोषः स्यादित्यधिकारइतिदिक् १ तिवाद्येकंपदं अष्टादशवा पदानिव्यापारे इतिशेषः व्यापारः क्रिया
साचधातोर्वाच्यासात्रिविधा अतीतानागतवर्तमानभेदात् तत्रवर्तमानक्रियाचेत्तेर्धातोस्तिवादयः तेचद्योतकाभवंति वर्तमानक्रियाया धातुनैवोक्तत्वा
त् एवमतीतादिष्वपिज्ञेयं यदितुसद्य आदिरित्यतः कालइत्यनुवर्ततेवर्तमानेकालेवाच्येतिवादय इतिव्याख्यायते तदावाचकतापक्षोभवति का
लस्यधातुनानभिहितत्वात् कालोऽपृद्रव्यातिरिक्तंनवमंद्रव्यमिति वैशेषिकादिमतं ईश्वरस्यैवमूर्तिभेदः कालइति वेदांतिमतं प्रधानस्यैवावस्था
भेदइतिसांख्यादिमतं पक्षत्रयेपितस्यैकत्वात् वर्तमानादिभेदाऽभावेऽपिवर्तमानादिक्रियोपाधिवशात् वर्तमानादिव्यपदेशोबोध्यः येतुप्रसिद्धप

वर्तमाने तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे ॥ २ ॥

रिमाणांसूर्यादिक्रियां अप्रसिद्धपरिमाणक्रियायाअवच्छेदिकांकालमाहुः सूर्यस्यउदयाचलसंयोगादारभ्यास्ताचलसंयोगपर्यंताक्रियादिनमु
च्यते अस्ताचलसंयोगादारभ्योदयाचलसंयोगपर्यंताक्रियारात्रिरित्युच्यते तदावृत्यातुपक्षमासादिव्यवहारः कालस्याप्यऽनित्यत्वाऽनेकत्वात्
तेषांमुख्यएववर्तमानादिव्यपदेशः अथकोवर्तमानोनामउच्यते लोकप्रसिद्धएव तदुक्तंफणिनालोकतएवैतत्सिद्धंनहीदंलोकाद्भिद्यते यदीदं
लोकाद्भिद्येततर्हियत्नार्हस्यादितिलौकिकाहिप्रारब्धाऽपरिसमाप्तंवर्तमानंव्यवहरंतिमार्कंडेयश्चिरंजीवतितस्य हिजन्मतः प्राणधारणमप्राप्यप
रिसमाप्तमितितिवादिप्रयोगः ननु अजीवीत्जीविष्यतिवाचतुर्युगसहस्रांतं ब्रह्मणोदिनंवर्ततेनन्ववर्ततवर्तिष्यतेवेति विंशत्यादिवर्षपर्यंतंवेदाध्य
यनेऽपिअधीतेइतिप्रयुज्यते नत्वऽध्यैतअध्येष्यतेवा येतुभूतभविष्यद्भिन्नोवर्तमान इत्याहुः तन्मतेवर्तमानभविष्यद्भिन्नोभूतः भूतवर्तमानभि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तो भविष्यन्नित्यपि स्यात्ततश्चान्योन्याश्रयदोषप्रसंगः यत्तु संप्रतिवर्तमान इति कालायसूत्रं वर्तमानसंज्ञाविधायकं तत्तुच्छं लोकत एव सि
द्धत्वात् तदुक्तं भगवता पाणिनिना कालोपसर्जने च तुल्यं वर्तमानादिकालसंज्ञा अप्रधानमुपसर्जनमिति न वक्तव्यं अर्थस्य ऽन्यप्रमाणत्वात्
तस्यार्थस्य लोकत एव सिद्धत्वात् अथ पर्वतास्तिष्ठंति भूभृल्लीन्यादौ कथं वर्तमानादिः प्रारब्धापरिसमाप्तत्वाद्यभावात् उच्यते सृष्टिसंहारश्रुति
प्रामाण्यस्वीकर्तॄणां मते ऽत्राप्यस्ति वर्तमानत्वं कल्पादौ प्रारब्धायाः स्थितेरपरिसमाप्तत्वात् तस्थुः पर्वताः भविष्यन्ति भूरित्यादौ त्वतीतानागतक
ल्पाचाद्यभूतभविष्यबोधे मीमांसकमते त्वनुपपत्तिः भूतानां सृष्टिप्रलयानंगीकारात् न कदाचिदनीदृशं जगदित्यभ्युपगमात् वैशेषिकमते आ
काशोस्तीत्यनुपपत्तिः आत्मास्तीति सर्वेषां मते ऽप्यनुपपत्तिः अत्र माधवः इह पर्वतादिस्थित्यादेः सर्वदा भावात् स्वतो भूतत्वाद्ययोगेपि कालत्रय
वर्तिनां राज्ञां भूतादिभेदभिन्नपालनादिक्रियाभेदात्तस्थुः पर्वतान् नलनहुषादिकाले स्थास्यंति कल्किविष्णुकाले तिष्ठंतीदानींतनभूपकाले इति भूत
त्वादियोग इत्याह आत्मनस्तु देहाद्युपाध्यतीतत्वादिनाप्यतीतत्वादिसंभवोस्ति अथ वर्तमानग्रहणमास्तु सामान्येन तिवादयो विधीयंतां अती
तानागतयोः सिस्यपोवाधकोस्यातां विशेषविधानादिति चेत् उच्यते वर्तमानसमीपे भूते भविष्यति च तिवादिसिद्ध्यर्थं वर्तमानग्रहणं तद्ग्रहणसामर्थ्याद्गौ
णस्यापि वर्तमानस्य ग्रहणं भवति अन्यथा भूतत्वभविष्यत्वयोः सत्वात् तत्र सिस्यपावेव स्यातां कदागमिष्यसि एष गच्छामि गमिष्यामि वा कदागतो
सि अयमागच्छामि अयमागमं वा वर्तमानत्वं क्रियायामन्वेति न फलेन तदाश्रयेन कर्तरि यदि फले अन्वीयात् तर्हि मासात्पूर्वं पक्वे ओदने इदानीं प
चतीति प्रयोगः स्यात् विक्लित्तेर्वर्तमानत्वात् न तु अपाक्षीदिति यदि फलाश्रयेन्वीयात् तर्हि मासानंतरं यास्यमाने ग्रामे ग्रामं यातीति प्रयोगः स्या
त् फलसंयोगः तदाश्रयस्य ग्रामस्य वर्तमानत्वात् न तु ग्रामं यास्यतीति यदि तु कर्तर्यन्वीयात् तर्हि मासात्पूर्वं पाकं कृतवति मासानंतरं वा पाकं करिष्य
ति पुरुषे दृष्टे इदानीं पचतीति प्रयोगः स्यात् कर्तुः पुरुषस्य विद्यमानत्वात् न तु अपाक्षीत्पक्ष्यतीति वा अयमत्र संग्रहः क्रियाफलयोर्बोधको धातुः त



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रधातुत्वेनसर्वानुगतेनक्रियाबोधकत्वंधातोःप्रातिस्विकेनरूपेणाभूतपचित्वाऽदिनाफलबोधकत्वंकालःसंख्याकारकंचाख्यातार्थःतत्रति
बादित्वेनकालोऽर्थःतिप्त्वतस्त्वादित्वेनएकत्वद्वित्वबहुत्वरूपासंख्यार्थःआत्वेनभावकर्मणीअर्थःआत्वेनपत्वेनचकर्तार्थःतत्रफलस्यकर्म
णिअन्वयःफलाश्रयस्यकर्मत्वात् व्यापारस्यकर्तरिअन्वयःधातूपात्तव्यापाराश्रयस्यकर्तृत्वात् संख्यायास्तुकर्तरिप्रत्ययेकर्तर्य्यऽन्वयःकर्म
णिप्रत्ययेकर्मणिकालस्यक्रियायांकर्तृकर्मणीक्रियायाविशेषणेक्रियातुविशेष्याइदंतुशाब्दिकमीमांसिकयोस्तुल्यंक्रियाप्रत्ययार्थइतिमी
मांसकाःप्रत्ययार्थस्यैवप्राधान्यमितिनियमात्कर्तृकर्मणीत्वाक्षेपलभ्येनत्वाख्यातवाच्ये वैयाकरणास्तुधात्वर्थःक्रियाक्रियावचनस्यैवधातुत्वा
दित्याहुःननुप्रत्ययार्थप्राधान्यनियमोपिकीदृशःयःप्रत्ययार्थःसप्रधानमेवयत्प्रधानंसप्रत्ययार्थएवेतिवानाद्यःस्त्रीप्रत्ययेस्त्रीत्वस्यप्रत्यया
र्थस्यप्राधान्याऽभावात् प्रत्ययार्थस्यकालस्यसंख्यायाश्चप्राधान्याभावात् नान्त्यःस्त्रीप्रत्ययांतेप्रधानस्यद्रव्यस्यप्रत्ययार्थत्वाभावात् शुक्लत
रःविहद्रूपःपचतितमांभिषक्पाशइत्यादौ प्रत्ययार्थस्यातिशयादेःप्राधान्यादर्शनात् अप्रत्ययार्थस्यराजपुरुषइत्यादौपुरुषादेःप्राधान्यदर्श
नाच्चकर्तृकर्मणोराख्यातार्थत्वेआद्युविकर्मणीतिकर्तरिपचेतिसूत्रंमानमस्तिक्रियायास्तदर्थत्वेनमानमस्ति किंचकृतवान् भोक्तुंयत्कोऽप्य
दौक्रियाप्रतीतिरस्तितत्रधातुरप्यस्तितेनधातोरेवक्रियावाचित्वंयुक्तंनत्वाख्यातस्यकृदंतेआक्षेपलभ्याक्रियाइतिचेत् तर्हिआख्यातांतेपि
तथैवास्तुनचाक्षिप्तायाःक्रियायाःप्राधान्यंनस्यादितिवाच्यं घटादिशब्दैर्वाच्ययाजात्याऽऽक्षिप्तायाःव्यक्तेःप्राधान्यदर्शनात् सत्वप्रधा
नानिनामानिक्रियाप्रधानमाख्यातमितिवचनाच्चप्राधान्यसंभवात् किंचकर्तुरवाच्यत्वेआख्यातोक्तसंख्यायाअनन्वयप्रसंगात् अवाच्य
कर्तरिचान्वयःस्यात् नह्यऽविशेषात्कर्मादावपिस्यात् ममतेतुआख्यातार्थकारकेआख्यातार्थसंख्यायाअन्वयःसंभवतिसमानप्रत्ययो
पात्तत्वात् किंचउक्तानुक्तव्यवस्थाचनस्यात् सर्वत्राख्यातेतस्यानभिहितत्वादितिदिक् तार्किकास्तुप्रथमांतविशेष्यकंबोधमाहुराख्यातस्यच

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चं० आ०
ल० भा०
३

त्वमर्थे यत्नार्थककरोतिना सर्वाख्यातविवरणात् कर्तुश्चावाच्यता कृतिमतो वाच्यत्वापेक्षया कृतेर्वाच्यत्वं लाघवात् अवच्छेदकं कृतित्वरू
पं सामान्यं लघु लभ्यते इत्याहुः मत्वर्थलक्षणया च संसर्गमर्यादया वा कृतिमान् देवदत्तो लभ्यत इत्याहुः उच्यते अस्मन्मते कर्ता वाच्यः स च धातू
पात्तव्यापाराश्रयः व्यापारस्तु धातुनैवोक्तः आश्रयमात्रं प्रत्ययार्थः आश्रयत्वं त्ववच्छेदकं तच्चाखण्डोपाधिरूपमतो नास्माकं गौरवगन्धोऽपि किंच तव
मते लक्ष्यतावच्छेदकस्य गौरवेऽपि न दोषः शक्यतावच्छेदकस्य तु दोषः इत्यत्र विनिगमकं नास्ति बीजाभावात् अत उभयोरपि गौरवं लाघवं वास्तु
किंचास्मन्मते कृतिरपि धातुनैवोक्ता परं तु न कृतित्वेन किंतु व्यापारत्वेन कृतेरपि व्यापारविशेषरूपत्वात् अतः सा न प्रत्ययार्थोऽन्यलभ्यत्वादनन्यलभ्य
स्यैव शब्दार्थत्वाङ्गीकारात् अपि च करोतेर्यत्नार्थकत्वे यदुक्तं तदपि न करोति कृत्यास्नार्थ इति वक्ष्यते केवलयत्नार्थत्वे यततिवदकर्मकता स्यात् करो
तिना सर्वाख्यातविवरणादित्यप्युक्तमयुक्तं नहि करोतिनाख्यातानां विवरणं किंतु धात्वाख्यातस्य तु आख्यातेनैव विवरणं पचति पाकं करोति शेते श
यनं करोति यदपि प्रथमान्तपदेनैव कर्ता लभ्यते न ह्यपि न देवदत्तपदेन देवदत्तत्वेन देवदत्त उपस्थाप्यते न कर्तृत्वेन प्रथमाऽपि न नामार्थमात्रे विधानात्।
अन्योक्ते प्रथमापि न संभवति तव मते कर्तुराख्यातेनानुक्तत्वाभावात् कर्तरि तृतीयैव स्यादाख्यातेनानुक्तत्वात् अन्योक्त इति उक्तकर्तरि प्रथमा विधीयते
न च कर्तृनिष्ठसंख्याया अभिधानात् कर्ताऽप्यभिहित एवेति वाच्यं मुख्याभिधाने संभवति गौणोक्तत्वग्रहणस्याऽन्याय्यत्वात् क्वचित्संख्योक्ता गृह्यते क्वचि
त्कर्मेति शास्त्रार्थस्य वैरूप्यप्रसंगाच्चेति कृत्तद्धितसमासैः संख्याया अनभिधानात् किंच कर्तुरवाच्यत्वे नाम्नि चेति पुरुषव्यवस्था न स्यात् समानाधि
करणे युष्मदादौ सति मध्यमादिर्विधीयते आख्याते न युष्मदस्मदोः सामानाधिकरण्यं कर्तुर्वाच्यत्वे सत्येव संभवति नान्यथा न च युष्मदि सति मध्य
म इति व्याख्येयमिति वाच्यं त्वां पश्यति पश्यामि चेत्यत्रातिव्याप्तेः न च युष्मदि कर्तरि सति मध्यमो भवतीति वाच्यं त्वया मया वा पच्यत इत्यत्रातिव्या
प्तेः किंच रथो गच्छतीत्यादावप्रसक्तिः स्यात् कृत्यभावात् न चात्र व्यापारे लक्षणेति वाच्यं गौरवात् शक्यसंबन्धो लक्षणेति शक्यसंबन्धश्चाभयत्रा ३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तव्यं मन्यते तु शक्तिमात्रं ज्ञातव्यमिति लाघवं लक्षणापि नाधुनिकी किंतु निरूढा वाच्याभूत्तिष्ठति आ प्रयोगरूढेरितीत्यादिप्रयोगस्यानादित्वात् नि
रूढलक्षणा च शक्तितो नाममात्रेण भिन्ना न वस्तुत इति दिक् २ धातोर्यादादयः प्रत्ययाः स्युर्विधिसंभावनयोर्वाच्ययोः इत्ययं वाचकतापक्षः न चा
त्र पक्षे विध्यादिनार्थेन कर्त्राद्यर्थबाधः विरोधाभावात् किंच कर्त्रादिरपि निरवकाशः न च तिबादावनवकाशः न्यायसामान्येन विध्यादिवत् व
र्तमानत्वभूतत्वादेरपि तिबादिदिवादिवाच्यत्वात् न चैवं धात्वर्थप्रति वर्तमानत्वादेः प्रत्ययार्थतया विशेष्यत्वं स्यादिति वाच्यं कर्त्रादावपि तुल्य
त्वात् ननु प्रत्ययार्थप्राधान्यमौत्सर्गिकमप्याख्याते त्यज्यते इति चेत् तर्हि तत एव नोक्तदोषावकाश इति यद्वा विधिसंभावनयोर्वर्तमानाद्धातोर्या
दादयः प्रत्ययाः स्युः विध्याद्यर्थस्य विशेष्यस्य प्रकृत्यर्थविशेषणत्वे द्योतकतापक्षोऽयं संभवति तत्रेयमुपपत्तिः विध्यादीनां प्रत्ययार्थत्वे नो चि

विधिसंभावनयोः यात् यातां युस् यास् यातं यात यां याव याम ईत ईयातां ईरन् ईथास् ईयाथां ईध्वं ईय ईवहि ईमहि ॥ ३ ॥

तं तथा सति कर्त्रादेरर्थस्य प्रत्ययान्तरेण चरितार्थस्य विध्यादयोऽर्था बाधकाः स्युः न च प्रत्ययान्तरेऽपि वर्तमानत्वादिभिर्विरोधात् कर्त्रादिरप्यनव
काशत्वाद्बाधकः स्यादिति वाच्यं वर्तमानादेरपि धात्वर्थतयाऽभ्युपगमात् ततश्च प्रत्ययान्तरे सावकाशस्य कर्त्रादेर्यादादिभिरभिधानं न स्या
त् ततश्च द्विवचनबहुवचने न स्याताम् अवादयश्च न स्युः पुरुषव्यवस्था च न स्यात् उक्तात्वप्रयुक्ता प्रथमा च न स्यादिति विपूर्वाद्धाञोऽन्तर्भावित
ण्यर्थान्नङ्कीति भावे किः विधिर्विधाने इत्यस्मादन्तर्भावितण्यर्थाद्धाकिः विधानं वेधनं वा विधिः अनुष्ठापनं कारणं प्रवर्तनेति यावत् यादा
दिवाच्यासौ धात्वर्थस्य विशेष्या विशेषणीया शिष्यो गुरुशुश्रूषको भवेत् एकशिष्याश्रया गुरुनिष्ठप्रीतिजननानुकूला या क्रिया तद्विषया प्रेरणेति
विशेष्यपक्षः प्रेरणाविषया एकशिष्याश्रया गुर्वाश्रयप्रीतिजननानुकूला क्रियेति विशेषणपक्षः उभयथापि क्रियाप्रधानमाख्यातमित्यस्य न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चं॰ आ॰
ल॰ भा॰
४

कश्चिद्विरोधः यादाद्यभिधेयायाः प्रवर्त्तनाया अपि क्रियारूपत्वात् द्योतकतापक्षेप्येवं क्रियाद्वयमपि धात्वर्थ एव विशेषणविशेष्यभावेन तु काम
चार्यः प्रवर्त्तना तु श्रुतिस्मृतिपुराणवाक्यनिष्ठा तत्कर्त्रीश्वरमन्वादिनिष्ठा लौकिकवाक्येषु तु पित्रादिवक्तृनिष्ठा प्रवर्त्तनास्ति प्रवृत्तेरिष्टसाधनत्व
मनुमीयते इयं वेदाध्ययनादिमत्प्रवृत्तिर्मदिष्टसाधनमीश्वरादिभिर्वेदादिभिर्वा कार्यमाणत्वात् पित्रादिकार्यमाणभोजनादिमत्प्रवृत्तिवत् याश्च
तिरीश्वरादिभिः कार्यमाणा न भवति सा तदिष्टसाधनमपि न भवति ब्रह्मवधसुरापानादिप्रवृत्तिवत् केचित्तु इष्टसाधनत्वं विध्यर्थमाहुः तन्न
वेदाध्ययनादौ पित्रादिभिः प्रवर्त्तिता एव बालाः प्रवर्त्तमानाः दृश्यन्ते न तु इष्टसाधनताऽज्ञानात् आदौ तेषां तदसंभवात् किंच आख्यातस्य य
त्नोऽर्थः प्रथमान्तविशेष्यकश्च बोधः तत्रेष्टसाधनस्य विशेष्यत्वं न संभवति प्रथमान्तपदेनानुपस्थानात् विक्लित्तौ यत्नेवान्वये तु प्रत्यया
र्थप्राधान्यस्वीकारस्य त्यागप्रसंगात् अन्नं पचेत् अन्नाभिन्नाश्रयया विक्लित्त्यनुकूला एकाश्रयया क्रियातद्विषया प्रवर्त्तना प्रेरणा वि
षयभूतो हि नाभिन्नाश्रयकविक्लित्त्यनुकूलैकाश्रयाक्रियेति वा बोधः अन्नं पाचयेत् अन्नाभिन्नाश्रयकविक्लित्त्यनुकूलाया क्रियातद्विषयैका
श्रयाक्रियेति प्रवर्त्तनात द्विषया प्रवर्त्तना प्रवर्त्तनाविषया अन्नाभिन्नाश्रयकविक्लित्त्यनुकूलभावना तद्विषया भावना अन्नं पापच्येत अन्नाऽभि
न्नाश्रयकविक्लित्त्यनुकूलातिशयिता या क्रिया तद्विषया प्रेरणा प्रवर्त्तनाविषया अन्नाभिन्नाश्रयकविक्लित्त्यनुकूलातिशयिता भावना अन्नं
पिपक्षेत् अन्नाभिन्नाश्रयकविक्लित्त्यनुकूला क्रिया तद्विषयेच्छा तद्विषया प्रेरणा प्रवर्त्तनाविषया अन्नाभिन्नाश्रयकविक्लित्त्यनुकूला क्रिया त
द्विषयेच्छेत्यादि संपूर्वकाद्भवतेश्चौरादिकाद्धोः प्रेरणे स्वार्थे वा णिचः भावेयुट्यहा अस्मादेव ज्ञापकाज्ज्ञातात् सुः ततः क्रियामेवेति विशेषः संभावना
कल्पना ऊहः सचोत्कटैककोटिकः संशयः स्थाणुर्वा पुरुषो वेत्यादौ तु सर्वाः कोटयः समत्वेन भासन्ते भवेदयं वेदविद्ब्राह्मणत्वादित्यादौ तु वेदवित्त्व
वेदविन्नत्वकोट्योर्वेदवित्कोटिरेव बाधिका अयमेव संशयसंभावनयोर्भेदः ब्राह्मणत्वादिति हेतुस्तु व्यभिचारित्वान्न निश्चायकः अवेदविदामपि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्मणानांदर्शनात् अब्राह्मणानामपिक्षत्रियाणांवेदविदांदर्शनात् वेदावास्यनुकूलभावनाश्रयएकोपरोक्षाऽर्थस्तदाश्रयात्मधारणानुकू
लायाभावनातद्विषयाब्राह्मणत्वहेतुकासंभावनाब्राह्मणत्वहेतुकायासंभावनातद्विषयावेदास्यनुकूलभावनाश्रयापरोक्षैकार्थनिष्ठात्मधा
रणानुकूलाभावेनेतिबोधः एवंमेवेदयंबलवान् क्षत्रियत्वात् भवेदयंधनवान्वैश्यत्वात् भवेदयंसेवकः शूद्रत्वादित्यादावपिबोध्य अन्यत्र
तुनिमंत्रणामंत्रणाऽधीष्टप्वपियादादिर्विहितः तत्रनिमंत्रणमावश्यकेऽर्थेप्रवर्तनायत्राप्रवर्तमानस्यप्रत्यवायः श्राद्धभोजनादौदौहित्रादेर्यथा
आमंत्रणमिच्छयाप्रवर्तनंयत्राऽप्रवर्तनेपिनप्रत्यवायः मंगलभोजनादौदौहित्रादेर्यथा अधीष्टंसत्कारपूर्वकप्रवर्तनंअध्ययनादौगुर्वादेर्यथा
तन्नविधिग्रहणेनैवसंग्रहात् प्रवर्तनायाःसर्वत्रानुगतत्वात् तदुक्तंवाक्यपदीयेन्यायव्युत्पादनार्थंचप्रपंचार्थमथापिवाविध्यादीनामुपादानंचतु
र्णामादितःकृतं १ अस्तिप्रवर्तनारूपमनुस्यूतंचतुर्ष्वपितत्रैवलिङ् विधातव्यःकिंभेदस्यविवक्षयेति संप्रश्नप्रार्थनवतिकर्तरियादादिर्विधेयएवत

आशीःप्रेरणयोःतुप्तांअंतुहिंतंतआनिप्आवप्अमप्तांआतांअंतांस्वआथांध्वंऐप्आवहैप्आमहैप् ॥ ४ ॥

त्रसंप्रश्नः अहंवेदमधीयउतशास्त्रमित्येवंभूतविचारःएवंप्रयागंगच्छेयमुतकाशींअहंगार्हस्थ्यंकुर्यामुतसंन्यासमित्यादिष्वपिप्रार्थनायांत्रामभो
भोजनंलभेयंभोदक्षिणांप्राप्नुयांभोकन्यांवहेयं अत्रविधिसंभावनयोरिक्तियोगविभज्यतिवादीननुवर्त्यविध्यादिष्वपितिवादयोविधेयाःयवाम्वाग्नि
होत्रंजुहोमि पशुनायजेतयादादावित्यत्रवर्तमानेइत्यनुवर्त्यवर्तमानेपियादादयोविधेयाः इच्छतुइच्छतिवच्छिउश्यात् ३ एतयोर्द्योत्ययोर्वाच्ययोर्वाधा
तोस्तुवादयःस्युःआशीःप्रेरणयोः प्रत्ययार्थत्वेवाच्यपक्षोभवति आशीःप्रेरणयोर्वर्तमानाद्धातोरितिपक्षेतुद्योत्यपक्षोभवतितत्रापिविशेष्यत्वंविशेषण
त्वंचेतिहेतआशासनंआशीःआङःशासुरिच्छायांसंज्ञायाम कर्तरीत्यनुवर्तमानेस्त्रियांक्तिरित्यधिकारेसंपदादेःक्विप्चेतिक्विप् अयमेवनिर्देशास्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वं॰ आ
लं॰ भा॰
५

स्यवचनस्यसत्वे प्रमाणं अस्मादेव निपातनात् क्विपि आन्‌ऽः ननु शासेरिरित्यनेनेत्वमस्तु न परस्मैपदिनः शासेस्तत्रग्रहणात् अन्यथाऽऽशा
स्तेरपि इत्वादावपि स्यात् आशिषीति निर्देशात् क्विलात्मस्य धात्तोः सस्यषः स्वचशासिवसिघसीनां भवति ज्ञापकसिद्धं न सर्वत्रेति उस्तः किरणः उ
स्तागोरित्यादौ वसेरीणादिकेरकि संप्रसारणे रूपं प्रपूर्वादीरगतावित्यस्मात्प्रेरणार्थे प्रतादेतभावितत्वस्याद्याभावे युद्धेवा प्रेरणा प्रवर्तनाविधि
शब्दार्थएव आशीःप्रेरणा च आशीःप्रेरणेतयोः आशासनं चाप्राप्तस्यैव संभवतीत्यप्राप्तप्रार्थनमाशीः सा च स्वस्य परस्य च संभवति स्वस्य
परस्येष्टार्थशंसनं वाशीरिदमप्यप्राप्यविषयमेव संभवति आयुष्मान् भवतु भवान् अतिशयितायुः प्राप्त्यनुकूलैकभवदर्थाश्रयात्मधारणक्रि
यातद्विषया शुभाशंसा शुभाशंसा विषयभूता दीर्घायुः प्राप्त्यनुकूलैकभवदर्थाश्रयात्मधारणा क्रियेतिवार्थः अत्राऽऽयुर्विषयाशीः फलतिपु
त्रवंतो भवंतो पुत्रसंबंधानुकूला द्विभवदर्थाश्रयात्मधारणक्रियातद्विषया शुभाशंसा शुभाशंसा विषयभूता पुत्रसंबंधानुकूला द्विभवदर्थाश्र
यात्मधारणक्रियेतिवार्थः वयं वेदमध्ययामहै वेदाक्षरावाप्त्यनुकूलावहस्मदर्थाश्रयाध्ययनक्रियातद्विषया शुभाशंसा विषयभूता वेदाक्षराव
प्त्यनुकूलावहस्मदर्थाश्रयाध्ययनक्रियेतिवार्थः अध्ययनायोद्यतो भवसाधो साधो साधु संबोध्यकाध्ययनफलकोद्योगवदेकयुष्मदर्थाश्र
यात्मधारणाक्रियातद्विषया प्रवर्तना प्रवर्तना विषयभूताध्ययनफलकोद्योगवदेकयुष्मदर्थाश्रयात्मधारणक्रियेतिवार्थः ज्योतिःष्टोमेन स्वर्ग
कामो यजेत स्वर्गप्राप्त्यनुकूला ज्योतिःष्टोमसंज्ञकयागकरणिकैकस्वर्गकामपुरुषाश्रयायाभावनातद्विषया प्रवर्तना प्रवर्तना विषयभूता स्वर्ग
प्राप्त्यनुकूला ज्योतिःष्टोमसंज्ञकयागकरणिकैकस्वर्गकामपुरुषाश्रया क्रियेतिवार्थः यद्यपि यागादिस्तु वादयोन कालविशेषे विहिताः त
थापि भविष्यत्कालोऽवगम्यते ऽतीतवर्तमानयोर्विध्याद्यसंभवात् यत्तु शब्दं कुर्वाणेऽपि नैरैविरामाशंकायां शब्दं कुर्वीतेति वर्तमानेपि विधिः
संभवतीत्युक्तं तन्न तत्रापि भाविशब्दविषयत्वाद्विधेर्न वर्तमानशब्दविषयता विधिग्रहणेऽनुवर्तमाने पुनः प्रेरणोपदानमधिकसंग्रहार्थं तेन



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नातिसर्गप्राप्तकालयोरपितुवादिः सिध्यति प्रैषस्तु विधिरेव त्वं गंगां गच्छ अतिसर्गस्तु तदिच्छया प्रवर्तनात वेला चेद्गंगां गच्छ केन चित्कं चित्प
सुक्तमध्यान्हकालस्त्वया वक्तव्यो मम तदा गंगां गन्तव्यास्तीति स आह प्राप्तस्ते कालस्त्वं गंगां गच्छेतिदिक् ४ तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् हीतयोः तातङो ङि
त्वेपि नात्यादेशः ज्ञापकसिद्धं न सर्वत्रेति ङित्वं तस्येत्स्यात्प्रवृत्तिः किंचानन्यार्थ ङितो ङित्वमंत्यादेशं प्रयोजयति अत्रतु भूतात्स्पृष्टाद् दृष्टादित्या
दौ गुणवृद्धि प्रतिषेध संप्रसारणे च चरितार्थत्वान्ङित्वस्य नांत्यादेशता नन्वतु पूतात् तां अंतु हितात् तं ततेत्यव कुतो न पठ्यते इति चेत् मैवं मेर
अनन्तायते चतुर्भिः को भागः त्रिभिः को वेति व्यवस्था न सिद्ध्येदितिदिक् ५ अनद्यतने ऽतीतकाले द्योत्ये वाच्ये वा धातोरिवादयः अस्मिन्नहनीत्य

तुह्योस्तातङाशिषिवा ५ अनद्यतने ततीते दिपूतां अन् सिपूतांत अमिपूर्वं मतन् आतां अंत थास् आथां ध्वं इ वहि महि ६

द्यसद्य आदित्वात् इदमश्शब्दाद्यप्रत्ययश्चाहनीत्यर्थे निपात्यते तद्धितो क्तत्वात् प्रथमा अद्यशब्दवाच्यः कियान्कालः अतीतरात्रेरंतिमं
यामद्वयमागामिन्याः प्रथमं यामद्वयं मध्यवर्ती दिवसः सकलः एषोऽद्यशब्दवाच्यः कालः केचित्तु अरुणोदयादारभ्याऽरुणोदयपर्यंतः का
लः अन्येतु सूर्योदयादारभ्य सूर्योदयपर्यंतमित्याहुः लौकिकानां ह्यो द्यश्व इति तत्रैव व्यवहारदर्शनात् अद्यभवोऽद्यतनः त्यतनावितितनः
पूर्वास्त्यद्यतनो यस्मिन्निति बहुव्रीहिरिति तस्मिन्ह्यस्तने काले दिवादिरर्थादपरोक्षेणादि विधानात् यद्वा अद्यतनादन्योऽनद्यतन इति नञ्
तत्पुरुषः अनस्वरे इत्यन् नाम्नो न इति नलोपश्तुन विधानसामर्थ्यात् एवमपि ह्यस्तनो लभ्यते नन्वद्य ह्यो भुंक्ष्महीत्यत्रातिप्रसंगः अद्यतना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ह्रिन्नस्यह्यइत्यस्यासत्वादितिचेन्न मैवं परत्वात् सेःसंभवात् दिवादेरवकाशोह्यस्तनः कालः ह्योभवत्वसुत्रः सेरवकाशोऽद्यतनोऽतीतः अभू
द्भूष्टिरितिउभयविवक्षायां द्वयोः प्रसंगे परत्वात्सिर्भवति अत्रानद्यतने इतियोगं विभज्य तिबादीननुवर्त्यानद्यतनेतिबादयोविधेयाः अनद्यतने
ऽतीतोऽनागतश्च ग्राह्यः तेन यजतिस्म इयाज वा युधिष्ठिरः यान्तं ददाति दाता वासः स्वर्गं याति याता वेति सिद्धं ननु ह्यस्तन इति वक्तुमुचितं लाघ
वात् उत्तरार्थं तान्यस्य नास्ति त्यस्तन इत्यस्यैवाऽन्वयसंभवादिति चेन्न सत्यं नञोक्तमनित्यमित्यद्यतनेऽपि परोक्षेणादिविध्यर्थमिदं वहुजनमरपुरस्ता
त्स्यमत्ता किलाहं सुप्तोहं किल विललाप अत्रमद्यनिद्रादोषेणस्वनिष्ठक्रियाया अप्यननुसंधानात्पारोक्ष्यं ननु वहुव्रीहिपक्षेऽद्यतने दिवादिः प्रा
प्नोति अद्यतनेऽद्यतनाऽभावादिति चेन्न निषेधस्य प्रसक्तपूर्वकत्वात् अद्यतने नद्यतनस्य प्रसंगाऽभावान्निषेधाभावः यद्वा अद्यतनेऽव्यापकेऽद्य

॥ परोक्षे णप् अतुस् उस् थप् अथुस् अ णल् व म ए आते इरे से आथे ध्वे ए वहे महे ॥ ७ ॥ ❖

तनस्याव्याप्यस्यासत्वात् दिवसे प्रहरोऽस्ति प्रहरे मुहूर्तः मुहूर्ते घटिका इति वत् ह्योभवत्वसुत्रः गतदिवसाऽवधारिका युष्मदर्थे जन्मपुत्राश्रया तथा
रणानुकूलातीता क्रिया वेदमध्येतुवदुः एक बहु भिन्नाश्रयका वेदमाध्यऽनुकूला चिराऽतीताध्ययनक्रिया अहमोदनमपचं एकाऽस्मदर्थाभि
न्नाश्रयोदनोत्पत्त्यनुकूला चिरातीता पाकक्रिया यूयं घटमकुरुत वहु युष्मदर्थाभिन्नाश्रया घटोत्पत्त्यनुकूला चिरातीतोत्पादनेति दिक् ६ अ
नद्यतनातीतपरोक्षार्थक्रियावृत्तेरिति द्योतकतापक्षे: अक्ष्णः परः परोक्षः टाडकाइत्यः यस्य लोपः अक्षादिद्रियात्पर इति वा क्वचिदमाद्यंत
स्य परत्वमिति पंचम्यंतस्य परत्वम् सहा हित्वात् परशब्दस्यौकारोऽस्मादेव निपातनाद्वा विक्लित्यनुकूलो व्यापारसंततोऽधः अयणातः पच्य
र्थः क्रियाशब्दवाच्यः तस्य समुदायस्य युगपदुत्पत्त्यभावादाशुविनाशित्वाच्च प्रत्यक्षत्वेन संभवतीत्यद्यपि तथाप्येकैकव्यापारस्य प्रत्यक्ष



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वात् तत्समुदायेपि प्रत्यक्षत्वाभिमानो लौकिकानां यत्र त्वेकोप्यवयवो न प्रत्यक्षस्तत्र क्रिया परोक्षेत्युच्यते अन्ये त्वाहुः यद्यपि क्रिया सर्वापरो
क्षैव प्रत्यक्षेण सा सर्वा समुदायीकृता निदर्शयितुं न शक्यते देशान्तरप्राप्त्यादिफलेन त्वनुमीयते तथापि तदनुकूलशक्तिमतां व्यापाराविष्टानां सा
धनानां पारोक्ष्यमिह विवक्षितं तेषां प्रत्यक्षत्वेपि प्रत्यक्षत्वं तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेपि णवादिर्भवत्येव अयं पपाच त्वं पेचिथेति एवं
स्वव्यापारस्यापि वर्तमानतादशायां व्यासंगादिना स्वयमप्रतिसंधाने ततः कार्येणाऽनुमितो भवत्येव अहं विललापेतिवत् नाहं कलिंगान् जगा
मेत्यत्र तु पापभयात्स्वयमनुष्ठितापि क्रियापलभ्यतेऽतस्तस्या अभावप्रतिपादनात्परोक्षता अतो वैचित्र्यापन्हवयोरिति न वक्तव्यं भवति रामो रा
ज्यं चकार प्रजापालनाद्यनुकूलेकरामाभिन्ना अश्या चिरातीता परोक्षा क्रिया त्वमीशमश्वमेधेनयष्ट एकयुष्मदर्थाश्रयाईशपूजनानुकूला

॥ द्विश्च ॥ ८ ॥

श्वमेधसंज्ञकयज्ञकरणिका चिरातीता परोक्षा क्रिया अनद्यतने किं ग्रामांतरे घटोऽभूत् अत्र घटभवनं परोक्षमतीतमपि न चिरातीतं अतीते किं
अयमन्नं भोक्ताऽत्र भुजेर्भविष्यदनद्यतनत्वेऽप्यतीतताभावः न चात्र विशेषविहितैस्तादिभिरेव बाधः स्यादिति वाच्यं अपरोक्षे तादीनां सावका
शत्वात्परोक्षे णवादिभिरेव बाधसंभवात् परोक्षे किं रामो राज्यमकरोदिति हनुमद्वाक्यं घटो भवदिति वक्तुर्घटोत्पत्तिश्चिरातीताऽपि न परोक्षा यत्तु
उत्तमपुरुषेण उत्तमो वेति ज्ञापकात् प्रयोग इति तन्न वैचित्र्यादौ तस्य सावकाशत्वादिति दिक् ७ णवादौ त्यनुवर्तनं सप्तम्या विपरिणम्यते धातोर्द्वि
र्वचनं भवति णादौ परे सति द्वौ वारावितिद्विः द्वित्रिचतुर्भ्यः क्रियावृत्तौ सुः कृत्वसोऽपवादः अनेनैव निर्देशेन द्विवचनं ज्ञाप्यते अत्र क्रियावाचकोवि
नाक्रियाऽवृत्तेरसंभवाद्वचनमित्यध्याह्रियते तच्चवक्तं तदऽपेक्षया धातोरिति कर्मणि षष्ठी धातोर्द्विरुच्चारणं कर्तव्य इत्यर्थः यद्वा द्विरिति संख्या
मात्रवाचका द्विशब्दाद्विंगार्थे इति सिः द्वौ कयोरितिवत् अन्यथा द्वौके स्थितिस्यात् धातोरिति गुणगुणिसंबंधे षष्ठी धातोर्द्वित्वं भवतीत्यर्थः अ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चं॰ आ॰ लं॰ भा॰ ७

त्रहि: प्रयोगो द्विर्वचनं नत्वादेश: सत्यादेशे तु तो सेत्स्यादैतु तो वेत्यादिरूपं स्यात् कृतस्य सत्त्वात् शब्द एव द्विरावर्तते न त्वर्थ: द्विश्चेति विधेय सहचरितेन चकारेण विधेयात् तं समुच्चीयते तच्चोक्तस्याऽसंभवात्तदानुक्तं गृह्यते तेनह्यते दिर्ग्यादेशो द्वित्वे नेति लक्ष्यानुरोधात् ऽन्यदपि भवति पिप्ये इत्यादि: परोक्ष इति योगं विभज्य द्विवादीन् अनुवृत्य परोक्षे द्विवादयो विधेया: तेनश्च्वद्वकारात् चकारवा अनंतरस्येति न्यायेनो क्तणादियोगेनैव द्वित्वं न विदोनवानामिति विहितणादियोग इति दिक् ८ स्वस्य परस्य चेष्टार्थस्य शंसनं आशी: तस्यां वाच्यायां धातोर्यादाद य: यद्वा प्रार्थ्यमान क्रियावृत्तेर्धातोर्यादादय इति ९ ननु ङित्वेनैव गुणादिनिषेध: सिद्ध इति चेन्न इज्यात् सुप्यादित्यादौ संप्रसारणार्थत्वात् आशीरिति किं स्वप्यादिति विध्यादौ माभूत् यादादे: किं स्वयं तु इत्यादौ संप्रसारणं यथा न स्यात् पंकिं यसीष्ट केशवो मंगलं क्रियासु: अस्तु वि

आशिषि यात् यास्तां यासुस् यास् यास्तं यास्त यासं यास्व यास्म सीष्ट सीयास्तां सीरन् सीष्टास् सीयास्थां सीध्वं सीय सीवहि सीमहि ९

आशीर्यादादे: पंकित् १० श्वस्तने ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस् ॥ ११ स्नु मे हे श्वा भिन्नाश्रयकावहुषु

ष्मदर्थसंबंध मंगलो स्यत्यनुकूलायोत्पादनात् द्विषयाऽऽशंसना आशंसना विषयोत्पादनावेति बोध: भगवन् त्वं नो मंगलं क्रियासीष्ठा: एकभ गवदर्थसंबोध्यकावल्ह स्मदर्थसंबंधि दु:खनाशनेन स्वरूपसुखाभिव्यक्त्यनुकूलायोत्पादनात् द्विषयाऽऽशंसा आशंसा विषयभूतोत्पादने तिवा बोध: अहं वेदमध्येषीय एकास्मदर्थाभिन्नाश्रया वेदाक्षरावाप्त्यनुकूलाया ध्ययनक्रियात् द्विषयाऽऽशंसा आशंसा विषयभूताऽध्य यनक्रियेति वा बोध: १० अद्यतनं दिनं विहायाऽऽगामि दिने श्वशब्दो वर्तते तत्र भव: श्वस्तन: काल: तस्मिन्वाच्ये धातोस्तादय: यद्वा श्वस्तने व्यापारे वर्तमानाद्धातोस्तादय: श्वो भविता राज्यं कुमारस्य द्विरागामि दिनाधारा एकराज्या: भिन्नाश्रयकाऽऽगामिकालभाविनी आत्मधार ७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णानुकूलाक्रियेत्यर्थः त्वंसुखंगन्तासि एकयुष्मदर्थाभिन्नाश्रयासुखोत्पत्त्यनुकूलाऽऽगामिदिनभाविनीगतिक्रियेतिबोधः वयंवेदमध्येता
स्महेवहूस्मदर्थाभिन्नाश्रयकावेदाक्षरावाप्त्यनुकूलाऽऽगामिदिनभाविनी अध्ययनक्रियेतिबोधः ११ भवनभूः संपदादित्वाद्भावेक्विप् तस्या
भुविशुद्धेधात्वर्थेसाध्यरूपेभावेघञर्थेस्तुसिद्धरूपोभावः स्वार्थेआश्रितिफलितंफलाश्रयः कर्मफलंचधातुनेवोक्तमित्याश्रयमात्रमाख्यातार्थः
अनन्यलभ्यत्वात् नचप्रथमांतेनैवाश्रयोलब्धइतिवाच्यं घटःक्रियते इत्यत्रघटत्वेनैवघटस्योपस्थानात् नत्वाऽऽश्रयत्वेन आश्रयत्वंत्वखं
डोपाधिरूपमवच्छेदकंयद्वा आश्रयत्वमेववाच्यंअभेदेनतदेवाऽवच्छेदकंचभावेऽकर्मकाद्धातोरात्कर्मणोऽसंभवात्सकर्मकात्तुकर्म
णिआत् ननुसकर्मकाद्भावेपिप्राप्नोति ततश्चघटंक्रियतेदेवदत्तेनेत्यपिस्यादितिचेत् मैवंद्विश्चत्यतश्चोऽनुवर्ततेसाऽवधारणार्थः सकर्मका

नोताराैतारस्तासेतासाथेताध्वेताहेतास्वहेतास्महे ॥११॥ आद्भुविकर्मणि ॥ १२ ॥

द्धातोःकर्मण्येवात्नभावेननुतर्हिभाववत्कर्तर्यपिनस्यादितिचेन्नमध्येऽपवादन्यायात् न्यायश्चायंलाघवमूलकः निषेधस्योपस्थि
तेनैवनिषेध्याकांक्षायाः पूर्तौअत्रपस्थितंनग्राह्यमितिलाघवं अथकिमर्थमिदमारभ्यते पूर्वयोगेस्निवादयोविहितास्एव नचार्थविशेष
लाभार्थमिदंअनिर्दिष्टार्थाःप्रत्ययाःस्वार्थेपिभवंतीतिभावार्थस्यलाभात् अपूकर्तरीतिकर्तुःइणतन्यकर्तरीतिकर्मणश्चलाभात् मैवं
अस्यनियमार्थत्वात् इणतन्यकर्तरीतिसर्वाणिकारकाण्यभिधेयत्वेनप्राप्तानिसंज्ञायामकर्तरीत्यत्रयथाप्राप्तानितथात्रापितत्रनियमोऽने
नक्रियतेकर्मण्येवात् नान्यस्मिन्नर्थेइत्यभावेऽप्राप्तौसत्यांअपूर्वोत्युक्तंतथापिकर्तर्यप्राप्तौकर्तर्यपिचेत्युक्तंनियमपक्षेपिनाऽर्थेनियमःक्रि
यतेकर्मणिआदेवनतुपंयतएवकारस्ततोऽन्यत्राऽवधारणमितिसिद्धांतादर्थे स्यनियमोभवति ननुप्रत्ययस्यतेनकारकांतरेप्रत्ययस्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽनिवारणादुष्टोऽयंपक्षः अतः प्रत्ययनियमोऽत्रक्रियते आत्मकर्मण्येवभवतिनकरणादौ अर्थस्याऽनियतत्वात्तत्रकृत्स्नत्ययाभवेत्येव अ
र्थनियमेपिवचनात्कृतः स्युरितिसुवचं अथभुविकर्मण्याऽऽदितिवक्तुंयुक्तं विधेयसमपदस्यानिर्देशस्यौचित्यादितिचेत् उच्यते आदितियो
गविभागेनाऽन्यस्मादपिधातोरादिधीयतेतेनजिज्ञासतेशुश्रूषतेसुस्मूर्षतेदिदृक्षतेइत्यादिसिद्धं ज्ञातुंसुस्मूर्षणामित्यादिनवक्तव्यंभवतिअ
थभूकर्मणीत्येववक्तव्यंकिंएथाद्रि·देशेनउच्यतेकर्तरीतियोगोविभज्यते भुवीतितत्तृतीययाविपरिणम्यतेकर्मणीत्यनेनकर्मस्थागृह्यते
तुल्येइतिलभ्याहियतेकर्मस्थयाभुवाक्रियया तुल्यक्रियेकर्तर्यौ इवतिकाष्ठंभिनत्तीत्यत्रकाष्ठस्ययाक्रियाविदारणाख्यातत्स्वरूपासैव
काष्ठंभिद्यतेस्वयमेवेत्यत्रतस्मिन्कर्तृभूतेपिभवतियक चतुर्ष्वित्यत्रयोगितिप्रथमोच्चारणाद्योगितियोगोविभजनीयः तत्रकर्मणिकर्तरीत्य
ऽनुवर्त्यकर्मकर्तर्यियगपिविधेयः लक्ष्यानुसाराद्योगविभागादिष्टसिद्धिरितिसिद्धान्ताच्चतुर्ष्वेवसः इणत्तु इणतनीत्यत्रवक्ष्यते एतावाऽऽद्य
कौकर्मस्थभावकानांकर्मस्थक्रियाणांचधातूनांभवतः नकर्तृस्थभावकानांकर्तृस्थक्रियाणांचयत्रकर्मणिदृष्टक्रियाऽनुमातुंशक्यते
तेकर्मस्थक्रियाः ततोऽन्येकर्तृस्थक्रियाः यथापक्वेषुतण्डुलेषुभिन्नेषुचकाष्ठेषुचदृष्टेष्वदृष्टः कर्तृव्यापारोऽनुमीयतेतदुक्तं कर्मस्थः पच
तेर्भावः कर्मस्थाचभिदेः क्रियाआसासिभावः कर्तृस्थः कर्तृस्थाचगमेः क्रियायद्यप्याधारभावयोरित्यत्रभावशब्देनक्रियाऽपिगृह्यतेतथा
प्यत्रभेदोविवक्षितः पृथगुपादानात् परिस्पन्दरूपोधात्वर्थः छिदादिः क्रियाअपरिस्पन्दरूपोविक्लित्यादिर्भावः पचतिओदनंभिनत्तिकाष्ठं
चदेवदत्तः पच्यतेओदनः भिद्यतेकाष्ठंस्वयमेवयद्यपिकाष्ठानिपचन्तिस्थालीपचतीत्यादौसाधनाधारयोरपिकर्तृत्वंदृश्यतेतथापिन
तत्रयगातावविधानात् क्रियतेघटः स्वयमेवेत्यत्रकरोतेरपिकर्मकर्ता दृश्यते सचोत्पादनार्थत्वएवसंभवति नतुयत्नार्थत्वे यत्नस्य
नेच्छादिवत्कर्तृस्थत्वात् आशास्तेघटेनआशास्तेघटः स्वयमेवगच्छतिग्रामंनागच्छतिग्रामः स्वयमेवघटग्रामयोर्दृष्टयोर्नहिपुरुषस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यापारोऽनुमातुं शक्यते इति कर्तृस्थलं क्रियायाः १२ कर्तरि वाच्ये धातोः पंचाशात् देवदत्तः पचतीत्येनोक्तत्वात्कर्तरि प्रथमा ननु भावक-
र्मकर्तृष्वाऽऽद्विधानात्कथं निर्णयः मैवं प्रयोगान्निर्णयसंभवात् आस्ते शेते पुरुष इत्यत्र कर्तरि प्रथमादर्शनात्कर्तर्य्येव शय्यते आस्यते
पुरुषेणेत्यत्र कर्तरि तृतीयादर्शनात् भावे स्यात् चक्रे करिष्यते वा घटं कुलाल इत्यत्र कर्तर्य्येव चक्रे करिष्यते वा घटः कुलालेनेत्यत्र क-
र्मणि स्यात् कर्मणि प्रथमायाः कर्तरि तृतीयायाश्च दर्शनात् कृषीष्ट कर्तेत्यत्र त्वनिर्णय एव यथा रामाभ्यामित्यत्राऽनिर्णयः कृते दृश्यागतत्व-
त्यादि सहोक्तौ तु तृतीयादेर्निर्णय एव केचित्तु अकर्मकाद्यक् सहितश्चात् भावे सकर्मकाद्यक् सहित आत्कर्मणि ताभ्यामपूर्वकयनमादि
सहितश्चात्कर्तरीत्यादि नियामकमाहुः तन्न कर्मकर्तरि व्यभिचारात् भिद्यते कुसूलः स्वयमेवेत्यत्र यक् सहितस्याऽऽत्तः कर्तरि विधानात्

कर्तरि पंच १३ यक् चतुर्षु १४ ॥

पच्यते ओदनेन भिद्यते काष्ठेनेत्यादौ भावे च दर्शनात् ननु कर्तृग्रहणं किमर्थं भावकर्मणोः पूर्वेण विधानात् परिशेषात् कर्तर्य्येव पं
भविष्यति अत्राह माधवः ननु पंचेत्येवास्तु सूत्रमाकारिकर्तृग्रहणं न चाडुवीत्यतो भावकर्मणोः अनुवर्त्तेयातामिति वाच्यं योगान्तरारंभा-
त् अन्यथा याप्युविकर्मणोरित्येव सिद्धत्वात् न चार्थान्तरं संभवतीति पारिशेष्यात्कर्तर्य्येव स्यादिति किं कर्तृग्रहणेन एवं तर्हि भावनिवृत्त्यर्थं कर्तृ
ग्रहणं अन्यथाऽनिर्दिष्टार्थत्वाद्भाव एव स्यात् अकर्तरीति ज्ञापकात्कर्तरि स्यादिति चेत् कर्तर्य्येव यथा स्यात्कर्मकर्तरि माभूदिति कर्तृग्रहण-
मिति तन्न धात्वर्थेन कारकाणामाक्षेपात्तत्प्रासौ तद्वारणार्थं कर्तर्य्येवेयमिति नियमार्थं कर्तृग्रहणसंभवात् अस्मदुक्तरीत्या कर्मकर्तर्य्यप्राप्ति
विधेः संभवात् त्वदुक्तरीत्या काष्ठानि पचंतीति करणे कर्तरि स्थाली पचतीत्याधारे कर्तरि चाप्रसंगात् १३ चतुः शब्दः चतुष्टयसंख्याविशिष्टस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाचकः संख्येयविशेषाकांक्षायां वचनानि न संबध्यन्ते तेषां चतुष्ट्याभावात् वचनानां त्रित्वात् नापि प्रथममध्यमोत्तमाः पुरुषाः संबध्यन्ते तेषामपि त्रित्वात् अतोऽत्र विभक्तयः संबध्यन्ते न च तत्र चतसृषु स्यादिति वाच्यं चतुर्ष्विति सामान्ये नपुंसकनिर्देशस्य संभवात् क्षुदुपदेतुं शक्यमितिवत् यद्वा आख्यातप्रकरणात् चतुर्विधेष्वाख्यातेष्वित्यर्थः तत्र वर्तमानार्थत्वमेका विधा विधिसंभावनार्थत्वमित्यपरा आशीःप्रेरणार्थत्वमित्यन्या अतीतानद्यतनार्थत्वमिति चतुर्थी यद्यपि सप्तविधा आख्याता उक्ताः प्राक् तथापि प्रथमातिक्रमे कारणाभावादिति श्वस्त्वारो ग्राह्याः अत्राव्यवहितमपि कर्तरीति नानुवर्तते उत्तरत्र कर्तृग्रहणादन्यथाऽनेनैव तत्सिद्धौ किं तेन अतो भुवि कर्मणीति चानुवर्तते तच्च नयकोऽभिधेयमाख्यातेनैवोक्तत्वादनन्यलभ्यस्यैव शब्दार्थत्वाभ्युपगमात् अतस्तन्निमित्तविशेषणं भावार्थकेषु क

॥ अपूकर्त्तरि ॥ १५ ॥

र्मार्थकेषु चतुर्ष्विति अत्र तन्त्रादिना वाक्यभेदेन वा द्वितीयोऽप्यर्थो ग्राह्यः भावकर्मार्थकेषु चतुर्षु परत इसेकोऽर्थः कर्मकर्त्रर्थेषु चतुर्ष्वित्यपरः चतुर्ष्विति निर्देशेन नामसंज्ञा प्रवृत्तिकालेनामांतस्य परे कस्य सुपि परे न विसर्ग इति ज्ञापितं तेन गीर्षु पूर्षु दोःषु सजूःष्वित्यादि सिद्धं एतदर्थमेव चतुर्ष्विति सामान्यनिर्देशः कृतोऽन्यथा चतसृष्वित्युक्ते इदं न ज्ञाप्येतेति दिक् १४ अत्रापि कर्तरीति नाऽपोऽभिधेयमाख्यातोक्तत्वात् किंत्वनुवर्तस्य चतुर्ष्वित्यस्य विशेषणं कर्त्रर्थेषु चतुर्षु धातोरपूप्रत्ययः नन्विह कर्तृग्रहणं किमर्थं भावकर्मणोर्यक् विधानात् परिशेषात्कर्तुर्लाभादिति चेन्न इह कर्त्रग्रहणे यको भावकर्मणोर्विधानाऽसंभवात् सन्निधानात्कर्तर्येव विधानसंभवाच्च अपूः पिलमपितादिर्डिदितिडित्वाऽभावार्थश्चान्यथा भवतः नयत इत्यादौ ङित्वाद्गुणो न स्यात् विधेयस्य प्रथमोच्चारणं तु योगविभागार्थं कर्मणि कर्तरीति चाऽनुवर्तते कर्मकर्तरि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चतुर्षु धातोरप्रत्ययः क्वचिद्भवतीति यकोऽपवादः तेन गणयति गणं गोपालः गणयति गणस्य केषांचिन्मते गणयते कर्मकर्तर्य्याह गणयति
गणयते गणः स्वयमेव कारयति घटं प्रभुः कारयते घटः स्वयमेव चिकीर्षति घटं कुलालः चिकीर्षते घटः स्वयमेव अलंकरोति कन्यां पिता
अलंकुरुते कन्या स्वयमेव ब्रवीति कथां विद्वान् ब्रूते कथा स्वयमेव गां दोग्धि गां धुक् दुग्धे गौः स्वयमेव प्रस्नौति गां गोपः प्रस्नुते गौः स्वयमेव
नमति दंडं दंडी नमते दंडः स्वयमेव अन्तर्भावितण्यर्थो वेतो गिरति ग्रासं अनागिरते ग्रासः स्वयमेवेत्यादि सिद्धं केचित्तु सन्निधानात् सन्निधाने
नाऽनुवर्तन्ति प्रयोजके किंत्विष्टत्वाऽनिष्टत्वे प्रयोजके यक्कर्तुर्ष्वित्यत्राऽनिष्टत्वात्कर्तरीति नाऽनुवर्तते इष्टत्वाद्दुविकर्मणीति चानुवर्तते ऽतो
त्रपारिशेषात्कर्तरीति लब्धे पुनः कर्तृग्रहणमन्यत्रापि कर्तरि यगाऽऽतो विधानार्थं तेन सृज्यते स्रजं भक्तः युज्यते ब्रह्मचारी योगं तप्यते तपस्ता

॥ अदादेर्लुक् ॥ १६ ॥ ह्वादेर्द्विश्च ॥ १७ ॥

पसः इति सिद्धं अत्र सृजति युनक्ति तपतीति प्राप्तमिति दिक् १५ अद् आदिर्यस्य स अदादिस्तस्मादादादेः अद भक्षणे इत्याऽऽरभ्य दिवु क्री
डेत्यतः प्राक्वर्ती समुदायोऽदादिशब्देन गृह्यते तस्य चाऽनेकत्वादवयवभेदस्याऽन्यपदार्थत्वेन विवक्षणादादेरित्येकवचनं पूर्वसूत्रात् पू
त्पनुवर्तते तच्च षष्ठ्या विपरिणम्यते तेन स्यलुग्विधीयते अत्र चतुर्ष्वित्यस्याऽनुवृत्तिस्तु नोपयुज्यते ऽचतुर्षु पोऽभावात् अत्र तद्गुणसंविज्ञानबहु
व्रीह्याश्रयणादत्तरप्यपो लुक् अपः किं मिद्यते एवमग्रेऽपि १६ हु आदिर्यस्य स ह्वादिः तस्य द्वौ वारौ इति द्विः द्वित्वविशिष्टवाचकात् द्विशब्दा
त्क्रियायाऽभ्यावृत्तौ सुः सा च योग्यताबलादुच्चारणक्रिया गृह्यते लुगित्यनुवृत्तं सप्तम्या विपरिणम्यते ह्वादेरिति कर्मणि षष्ठी उच्चारणक्रियायाः
कर्मत्वात् तथा च लुकि सति ह्वादिर्द्विवारमुच्चारणीय इति फलितं द्विः प्रयोगो द्विर्वचनमिति सिद्धान्तो न तु स्थाने द्विर्वचनमिति लुकि किं हूयते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र चकारोऽधिकः पूर्वेणापो नुकि अनेन द्विर्वचनस्य विधानेन सिद्धत्वात् चकारोऽनुक्तसमुच्चयार्थः तेन भी ह्री भृ हुवा ऽऽमामिति द्वित्वमि त्वं च सिध्यति १७ दिव आदिर्यस्य स तस्माद्यप्रत्ययो भवति कर्त्रर्थेषु चतुर्षु परेषु अत्राऽनुक्तसमुच्चयार्थश्चकारोऽनुवर्तते तेन भ्राश भ्लाश भ्रमु क्रमु क्लमु त्रसि त्रुटि लष यो वा अनुपसर्गाद्यसः संपूर्वाच्चेति बोध्यं यद्वा भ्राशादयो धातवः दिवादिषु पुषादिभ्योऽन्यत्र पठ्याः आदृहौ आदृहेषु पाठः पाठेषु उभया हौः उभयाहेषु अर्थोऽयं तत्तद्गणोक्तः अत्रापि ग्राह्याः वा भ्राशेति सूत्रारंभे यथा यसु संयसु इति च पाठद्वयं यसुपाठेन सिद्धे संपूर्वपाठस्तु नियमार्थः संपूर्वादेव यो न उपसर्गान्तरपूर्वात् अपत्तु भ्वादिपाठाद्भवति येन नाप्राप्ते न्यायेनापोऽपवादोऽयं यः चतुर्षु किं दि देवकर्त्रर्थेषु किं दीव्यते यद्यपि पेयकिं च समानरूपं तथाप्यर्थे पदे च विशेषः १८ सु आदिर्यस्य स स्वादिस्तस्मान्नुः प्रत्ययो भवति कर्त्रर्थेषु चतु

॥ दिवादेर्यः ॥ १८ ॥ स्वादेर्नुः ॥ १९ ॥ तुदादेरः ॥ २० ॥

र्षु सुनोति चतुर्षु किं सुषुवे कर्त्रर्थेषु किं सूयते सोमो भवता श्रु श्रवणे स्वादिष्वेव पाठ्यः हशादेः पश्यादिरिति श्रुभावः तक्षू तनूकरणे अ स्वाभ्यामा वेतौ स्वादिष्वपि पाठ्यो भ्वादिषु चेत्तेन तक्ष्णोति तक्षति अक्ष्णोति अक्षतीत्यादि सिद्धं १९ तुद आदिर्यस्य स तस्मात् अप्रत्ययः कर्तरि चतुर्षु अप्र त्ययस्यापित्वादिति ङित्वान्न गुणः तुदति किं च अप्रत्यये सति वादीपोः शतुरिति नुम्विकल्पः तुदंती अपि तु नित्यं नुम् पचंती अथ शियति धिय तिइत्यत्र अप्रत्यये सति गुणः कुतो न न तु धातोरुपधाया गुणो विधीयते अत्र तु इकारो न धातोरुपधेति चेत्तु उपधाया इत्यवयवषष्ठीत्वात् उपध भूतस्य च धात्ववयवत्वात् गुणप्राप्तेः सत्वात् उच्यते अंत्याद्वर्णात्पूर्वस्योपधात्वेनान्त्यस्यापि धात्ववयवस्यैव ग्रहणात् अप्रत्ययस्य चाधात्ववयव त्वान्न दोषः यद्वा अंतरंगबहिरंगयोरंतरंगं बलवदिति परिभाषाश्रयणात्त इयङ् तु अप्रत्ययमात्रापेक्षत्वादंतरंगः गुणस्तु प्रत्ययमाख्यातं चापेक्ष्य



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माणो बहिरंगः एवमश्रुश्रुवद्दुद्रुवदित्यादावपि बोध्यः २० रुध आदिर्यस्य स रुधादिः तस्मान्नम् प्रत्ययो भवति कर्तरि चतुर्षु रुणद्धि चतुर्षु किं
रुरोध कर्तरि किं रुध्यते ननु रुधादेरिति भाष्यमंतर्वर्तिविभक्त्याश्रयणेन पदत्वात् समिदाऽऽधानमितिवदिति चेत्सत्यं स्वस्थार्थपदकार्याःक
रणे अन्यथा रुदिः आदिर्वा रुधिः आदिर्वा संदेहः स्यात् ननु व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात् रुधिरादिर्ग्रहीष्यत इति चेत् एवं
तर्हि क्वचिदवांतरपदकार्येनेति ज्ञापितं क्षीरस्य पाने क्षीरपाणं सुरापाणं श्रवणमित्यादावेकपदत्वप्रयुक्तं णत्वं भवति समासे क्वचिदेकपदं
णत्वे हेतुरिति तस्मादेव लब्धं स्यादेतत् नम् किं प्रत्ययः आगमो वा नाऽऽद्यः रुधादेरिति पंचम्याश्रयणात् परः स्यान्न तु मध्ये न च मित्त्वसाम
र्थ्यादंत्यात्स्वरात्परो भविष्यतीति वाच्यं नमित्यस्य नम इत्यत्र विशेषणे मित्त्वस्योपक्षीणत्वेनासामर्थ्यात् अन्यथा नम इत्यत्र नादित्युक्ते य

॥ रुधादेर्नम् ॥ २१ ॥ तनादेरुप् ॥ २२ ॥

त्वानेोपावनानामित्यादावपि नलोपापत्तेः न च दीर्घे कृते न शब्दात्परत्वाभावात् नातिप्रसंग इति वाच्यं परत्वान्नलोपस्यैव प्रसंगात् नाद्यः
आगमत्वे मध्ये विधानसंभवेप्ययोदुर्वारत्वात्प्रत्ययस्यैव हि प्रत्ययांतरमपवादो भवति नत्वागम इति उच्यते मित्त्वसामर्थ्यादंत्यात्स्वरात्परोऽयं
नम् न च विशेषणेऽउपक्षीणं तद्धि शेषणार्थं अनुबंधांतरस्यैव सुवचत्वात् नमिमध्ये सत्तितिवादिपरत्वस्यानवकाशत्वेनाऽऽप्रस्यादिति वाच्यं
दधि ब्राह्मणेभ्यो दीयतां तक्रं कौंडिन्यायेति न्यायेन तक्रदानेन दधिदानमिव नमा बाध्यत इति सुवचत्वात् सत्यपि संभवे बाधनं भवतीत्यभ्यु
पगमात् यद्वा अवादिभिराख्यातानां कर्त्रर्थे बोधनीये साहाय्यं क्रियते तच्च प्रतिपदोक्तेन नमैवं कृतमित्यपो न प्रयोग एवेयर्थ्यादिति दिक् २१
तन आदिर्यस्य स तस्मात् उप्रत्ययो भवति कर्तरि चतुर्षु तनोति चतुर्षु किं ततान कर्तरि किम् तन्यते नन्वेवं नलोपशिश्वादेरिति वत्तादेरित्यपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भाव्यमिति चेन्नस्य ष्टार्थेन लोपाऽकरणात् अन्यथादेरित्युक्ते तनादेर्वा तकारादेर्वा सन्देहः स्यादथ व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात्सं
देहाभाव इति चेत् तर्हि क्वचिन्नलोपाभावो ज्ञाप्यते सन् आदिर्येषां ते सनादयः वृषं वर्षकं वसु यस्य स वृषण्वसुः वृषाऽश्वो यस्य स वृषणश्व
इत्यादौ नलोपो न यद्वा तन आदिर्यस्य उच्चारणार्थोऽकारः एवं रुध आदिर्यस्येत्यपि अथाप्यः पित्किमर्थं न चनुपः इत्यत्र विशेषणार्थं नु स्य
उश्चेति द्वन्द्वे न्वोरिति उश्च नुश्चेति द्वन्द्वे उन्वोरिति निर्देशेन वा निर्वाहात् नु प्रत्ययसाहचर्यात्प्रत्ययस्यैवोकारस्य ग्रहणं न च नु धातुरेव ग्राह्यस्त
स्य गुण इत्येव सिद्धत्वात् प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति न्यायाच्चैवमेव अपित्तादिर्ङिदिति ओर्ङित्त्वेन करोति कुरुत इत्यादौ गुणाऽ
प्रसंगात् न च ङित्यद्गुरिति ज्ञापकात्करोतेर्गुणो भवति गुणं विनाऽकाराऽसंभवादिति वाच्यं घर्णोतीत्यादौ गुणाप्रसंगादिति दिक् २२ क्रयादे

॥ नाक्र्यादेः ॥ २३ ॥ हसादानहौ ॥ २४ ॥

र्धेस्य स क्र्यादिस्तस्मान्ना प्रत्ययो भवति कर्त्रर्थेषु चतुर्षु क्रीणाति चतुर्षु किं चिक्रायक कर्त्रर्थेषु किं क्रीयते प्रत्ययस्यादावुच्चारणं योगविभागार्थं
ना इति योगो विभज्यते श्वादेर्नुरित्यतो नुरित्यनुवर्त्तते धातोर्ना प्रत्ययो भवति नुश्च कर्तरि चतुर्षु अत्र च स्तम्भु स्तुम्भु स्कम्भु स्कुम्भु स्कुञ् एत एव धातवो गृह्य
ते लक्ष्यानुसारात् स्तभ्नाति स्तभ्नोतीत्यादि एते सौत्राश्चत्वारः यद्यप्येते क्र्यादिषु पठ्येरंस्तदापि नु विधानार्थं योगविभागः कर्तव्यः क्र्यादेर्नेति पाठ
त्वात्तत्र नु रनुवर्त्तते नुः सर्वेभ्यः क्र्यादिभ्यः स्यात् २३ धातोरित्यनुवृत्तस्य हसादित्यनेन विशेषणात्तदन्तविधिः हसान्ताद्धातोरानः स्याद्धौ परे नाप
वादः स्तम्भ्वादिभ्योऽपि हौ परे नाप्राप्ते तस्यापवादश्चानो भवति गृहाण बधान स्तभान नुस्तु भवत्येव येन नाप्राप्त्यभावेन आनस्य तदपवादत्वाभा
वात् यदि तु क्र्यादेरित्यनुवर्त्तते हसान्तात्क्र्यादेरिति व्याख्यायते स्तम्भ्वादिभ्यो न प्राप्नोतीति तेषां सौत्रत्वेन क्र्यादित्वाभावात् यदि तु तेऽपि क्र्यादिषु प



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ठ्येतेतद्दानकापिस्क्षतिः २४ तिङादिर्येस्यतस्मिन्भविष्यत्यर्थेवर्तमानाद्धातोः स्यप्प्रत्ययोभवतिस्यादौपरेसतीतिइतिभविष्यत्वद्योत्यधातोः
स्यप्प्रत्ययोभवतिभविष्यतिकालेतिवादौपरेऽत्रपक्षद्वयेऽनुवादसामर्थ्यात्तिवादि यद्वाधातोर्भविष्यतिकालेतिवादिः तस्मिंश्चपरेस्यवि
तिपक्षेतुतिवादेर्वाच्यभविष्यत्वकर्तृकर्मभावास्तिवादीनामर्थाः सत्येवन्तुभविष्यतीति शत्रन्तात्सप्तमीशतरितुस्यप् प्रत्ययोनास्तीत्या
दौतद्विधानात्मेवंशतृशानयोरपितिप्तवदित्यतिदेशात्स्यप् प्रत्ययोभवति यद्वा अस्मादेवनिपातनाच्छतरिस्यप्प्रत्ययोभवति शानस्या
प्युपलक्षणंतेनपक्ष्यन् पक्ष्यमाणः भोक्ष्यन्भोक्ष्यमाणइत्यादिसिद्धंतुम् तदर्थायाभविष्यतीत्यत्राप्येवंकरिष्यतीत्यादौकिंकर्ताभविष्य
तिकिंअति २५ प्रत्ययाधिकारेऽप्ययमागमश्चित्वसामर्थ्यात् प्रत्ययत्वेदिवादौपरेधातोः परःस्यात्तथाचटित्वंव्यर्थंस्यात् प्रयोजनाभावात्अ

॥स्यादौभविष्यतिस्यप्॥२५॥दिवादावट्॥२६॥

गमीचास्यधातुरेवषष्ठीनिर्देशाभावात्तुविकरणः षष्ठ्यभावात् ननुदिवादाविति सप्तमीतत्रवाच्यवहितेतस्मिन्परेधातोरटाभाव्यमवादिव्य
वधानेनप्राप्नोति नचवचनसामर्थ्याद्भविष्यतीतिवाच्यं अजुहोदित्यादौलुप्तविकरणेचरितार्थत्वात् नचपरत्वादट्विकरणस्यनित्यत्वात
दिकृतेचाकृतेचप्राप्तेः यतुअवण्यनित्यः शब्दांतरप्राप्तेः कृतेअटिअभूइत्यस्य अकृतेचभूइत्यस्यद्वयोरप्यनित्ययोः परत्वादडेवादौभ
वतीतिमाधवेनोक्तं तन्नशब्दांतरस्यप्राप्नुवन्विधिरनित्योभवतीतिसिद्धांतात् शब्दांतरान्प्राप्नुवन्नितिसिद्धांताऽभावात् अभूइत्यस्यभूइ
त्यस्यऽचेतसऽत्रषष्ठ्यऽप्यशुद्धात्रपिधात्वऽनवयवत्वात् भूइत्यस्माद्विपिपंचम्याउचितत्वात् उच्यतेशब्दमात्राऽपेक्षत्वादंतरंगोऽटविके
रणस्तुकर्त्राद्यर्थापेक्षणाद्बहिरंगः अंतरंगबहिरंगयोरंतरंगोबलवदित्यादावट् यद्वादिवादावेडिति सूत्रंतंत्रादिनाव्याख्येयएकेनाऽव्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वहिते दिवादावट् द्वितीयेन व्यवहितेपि येन नाव्यवधानेनेति न्यायात यद्वा दिवादावडित्यत्र अवाऽऽदीननुवर्त्य वाक्यभेदेन व्याख्येयं दिवादौ परे धातोरट् दिवादिपरावादौ परे धातोरट् त्पादावितिवद्यादावितिवज्जुचिते दिवादौ किं हंतिजुहोति स्वर आदिर्यस्य स तस्य धातोरट् भवति दिवादौ परे औहत ऐक्षत नन्वऽत्र दिवादावडित्यट् विहितएव किमर्थं मिदं सत्यं अस्यारंभसामर्थ्यात् द्वितीयोऽड्विधीयते ननु द्वयोरटोः प्रथमतः सवर्णे दीर्घएवास्तु ततश्च ऐक्षत औहतेति स्यात् मैवं द्वितीयाड्विधानवैयर्थ्यप्रसंगात् न च एकस्मिन्न टि कृते तेन धातोः स्वरादित्वाद्वितीयस्य कथं प्रसंग इति वाच्यं यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यंते इति न्यायेनाड्विशिष्टस्यैव धातुत्वात् नन्वटि कृते सर्वेषां स्वरादित्वाद्वितीयोऽट् स्यान्न चाऽऽद्योच्चारणे स्वरादित्वं विवक्षणीयमिति वाच्यम् औष्ट ऐज्यतेत्यादावऽव्याप्रसंगात् उच्यते अटं विना स्वरादित्वमिह वि

॥ स्वरादेः ॥ २७ ॥ स्यपृक्रियातिक्रमे ॥ २८ ॥

वक्षितं स्वरादेरिति वचनसामर्थ्यात् अन्यथा दिवादावडित्यस्याग्रे अट् चेत्येव सूत्रमस्तु दिवादौ परे द्वितीयोऽट् भविष्यति किं स्वरादिग्रहणेन तन्वैज्यतोप्येतत्यादौ प्रथममंतरंगत्वाद्दिवादावट् ततो यकततो यजादित्वात्संप्रसारणं ततो धातोः स्वरादित्वेपि द्वितीयोऽट् न स्यात् प्रथमऽटा स्वरादित्वस्याग्रहणात्संप्रसारणस्वरस्याऽस्वादित्वाभावादिति चेन्न अट् संप्रसारणयोरादेशे कृते तस्य यदादेशन्यायेन धातुग्रहणेन ग्रहणाद्वितीयाटः संभवात् स्वरादेः किं अभवत् दिवादौ किं ईहते २७ क्रियाया अतिक्रमः अनिष्पत्तिः असिद्धिरिति यावत् भविष्यतीत्यनुवर्तते उत्तरसूत्राद्भूते इति च भूते भविष्यति चार्थे वर्तमानाद्धातोर्दिवादिः प्रत्ययो भवति क्रियानिष्पत्तौ गम्यमानायां दिवादौ च परे स्यपृ भवति यद्धातोः परः भूते भविष्यति चार्थे वाच्ये दिवादिर्भवति तस्मिंश्च परे स्यपृ क्रियातिक्रमे गम्ये स्यपृविकरणत्वादनर्थकः त्यादाविन्यादावपि ए



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वंसिरपिकालस्तुधातोर्लाऽऽख्यातस्यवार्थः कर्त्रादिकंतुआख्यातस्यैव यद्वाभविष्यतिभूते इतिचनानुवर्तनीयंपरिशेषाल्लभ्यत्वात् वर्तमान
क्रियायाअतिक्रमाऽसंभवात् यदिक्रतुनामंस्यत्सुखमयास्यत् क्रतुकर्मिकाएकाश्रयानतिस्तद्भावप्रयुक्तासुखकर्मिकाएकाश्रयाभूता
भविष्यंतीवायाप्राप्तिस्तदसिद्धिः यदिप्रयागमगमिष्यत्तदामोदकमभोक्ष्यत् प्रयागकर्मिकाएकाश्रयाभूताभविष्यंतीवायागतिस्तद्भावप्र
युक्तामोदककर्मिकैकाश्रयाभक्ष्यक्रियायाः असिद्धिः यदिसुवृष्टिरभविष्यत्तदासुभिक्षमभविष्यत् सुवृष्ट्याश्रयाऽऽत्मधारणाऽनुकूलाभूता
भविष्यंतीवायाक्रियातद्भावप्रयुक्तासुभिक्षाश्रयात्मधारणाऽनुकूलायाक्रियायाअसिद्धिः क्रियातिक्रमेकिंसुवृष्टिरभूत्सुभिक्षमभूत्सुवृष्टिर्भ
विष्यतिसुभिक्षंभविष्यति दिवादौकिम् क्रतुनेमेवत्सुखंयायात्क्रतुननतःसुखंनप्राप्तमितिक्रियानिष्पत्तिरस्तिस्यप् ग्रहणंचिंत्यत्यादावित्यतो

॥ भूतेसिः ॥ २९॥ नवपं ॥ ३०॥

ऽनुवृत्तिसंभवात् अटूलाऽऽगमत्वात्स्यपोऽनुवर्तनेनव्यवधायकः एवंस्यप्ग्रहणंव्यर्थमितिचेन्नयोगविभागार्थंतेनशत्रादौकचित्स्यप्भव
ति भविष्यन् भोक्ष्यमाण इत्यादि २८ अभूदितिभूतः अकर्मकत्वात्कर्तरिक्तः स्वसत्तयाकालंव्याप्तवान् भूतसामान्यार्थेवर्तमानाद्धातोर्दिवादिर्भव
ति धातोः परः भूतसामान्येर्थेदिवादिर्भवतितस्मिंश्चपरेसिप्रत्ययोभवति अभूद्वृष्टिः सिसहितस्यदिवादेर्भूतसामान्योऽर्थः अवादिसहितस्यतुभूत
विशेषोऽनद्यतनोऽपरोक्षःभूताऽनद्यतनपरोक्षेणवादेःविशेषेपियदिसामान्यविवक्षाविशेषाऽविवक्षातदासिर्भवत्येवअभून्नपोदशरथ इ
तिविशेषविवक्षायांतुअभवन्नपोदशरथोवभूवेतिवाभूतेकिं अतिदिवादौकिंआगच्छामिवर्तमानसमीपेभूतेएषआगच्छामीत्यादौ वर्तमानत्वा
ऽऽरोपात् तिवादिर्भवति नदिवादिरितिदिक् २९ प्रत्येकंअष्टादशवचनात्मकाद्दशविधाआख्याताउक्तास्तेषांनवनववचनानांसंज्ञेविधीयेतेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वादीनामाद्यानिनववचनानिपंसंज्ञानिपराणिनवआत्संज्ञानिपराणीतिपरशब्देननवपमित्यत्राऽध्यानीतिलभ्यते अत्रकेचित् पाऽतशब्दा
भ्यामचयवाभ्यांपरस्मैपदात्मनेपदशब्दावयवंविनावाक्षिप्येते नोचसंज्ञात्वेनविनियुज्येते इत्याहुस्तन्नतयोरन्नावृतेः दादेःपेणित्येआतोऽनो
हनतआहुवीत्यादौपाच्छब्दयोरेवावृत्तिर्हृद्यतेलाघवाच्चपाच्छब्दावेवसंज्ञेनतुपरस्मैपदाऽत्मनेपदशब्दाभ्यांअन्वर्थत्वेनपरगामिक्रियाफ
लेआत्मगामिक्रियाफलेर्थोलभ्यते पाच्छब्दाभ्यासकथंलभ्यमुच्य इतिचेत् नविवक्षयानिर्वाहात् नहिविभर्तिविभ्रतेहरणाहृरंधेक्रीणाति।
क्रीणीतेइत्यादावन्यन्नियामकंनहिकमलवनोद्घाटनंकुर्वतेयेइत्यादावात्मगामिफलंलभ्यते याजकोयजति यजमानोयजते इत्यत्रैवप
रगामित्वात्मगामित्वफलंलभ्यतेतत्तुकल्पसूत्रवलात्शिष्टाचारवलाद्वावोध्यंव्यर्थोऽतः समुदायाक्षेपइतिदिक् ३०।३१ अत्रपाऽतशब्दा

॥पराण्याऽत्॥३१॥नाम्नि चयुष्मदिचोऽस्मदिंचभागैः ३२

वनुवृत्तौसमम्याविपरिणमयितव्यौ आहुवीत्यादेः कर्मणीतिकर्तरीतिचाऽनुवर्तते नामादिशब्देनविभक्त्यंतंगृह्यतेत्रिकपक्षेऽविभक्तिक
त्राद्यभिधानासंभवात् पंचकपक्षोवाग्राह्यः प्रकरणात्तिवादयोदशविधाआख्यातागृह्यंतेनामाद्यर्थेकर्तरिकर्मणिचविहितानांतिवादीना
याऽतोर्थानिनववचनानितानित्रिभिर्भागैर्विभज्यप्रयोक्तव्यानियथासंख्येननामार्थेकर्तरिप्रयुक्तेऽप्रयुक्तेचप्रथमोभागः प्रयोक्तव्यः स
पचतितौपचतः तेपचंतिसपचतेतौपचेतेतेपचंते अप्रयुक्तेपचतिपचतः पचंतिपचतेपचेतेपचंतेनामार्थेकर्मणिओदनः पच्यतेओदनौ
पच्येते ओदनाः पच्यंते अप्रयुक्तेपच्यतेपच्येतेपच्यंते पंतुकर्मणिनास्ति युष्मदर्थेकर्तरित्वंपचसियुवांपचथः यूयंपचथत्वंपचसेयुवांप
चेथेयूयंपचध्वेअप्रयुक्तेपचसिपचथःपचथपचसेपचेथेपचध्वेयुष्मदर्थेकर्मणिप्रयुक्तेत्वंदुःखीक्रियसेरोगैः युवांदुःखिनौक्रियेथे यू



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यंदुःखिनः क्रियध्वे अप्रयुक्ते क्रियसे क्रियेथे क्रियध्वे अस्मदर्थे कर्तरि प्रयुक्ते अहं पचामि आवां पचावः वयं पचामः अहं पचे आवां पचाव
हे वयं पचामहे अप्रयुक्ते पचामि पचावः पचामः पचे पचावहे पचामहे अस्मदर्थे कर्मणि प्रयुक्ते विरागैः सुख्यहं क्रिये आवां क्रियावहे वयं क्रि
यामहे अप्रयुक्ते क्रिये क्रियावहे क्रियामहे त्वया पच्यते मया पच्यते इत्यऽत्र युष्मदाद्यर्थे आख्यातस्य विधानाभावान्न मध्यमोत्तमौ ननु आ
ख्यातानां वर्तमाने तिप्तसित्यादिना आडुत्तमेत्यादिना च कर्तरि कर्मणि च सिद्धत्वात्किमर्थमिदमारभ्यते सत्यं नामार्थयोः कर्तृकर्मणोर्मध्यमो
त्तमावपि प्राप्नुतः युष्मदर्थयोः प्रथमोत्तमौ अस्मदर्थयोः प्रथममध्यमावपि अतो नियमार्थमिदमारभ्यते नियमार्थत्वेपि न नामादि नियमः नामा
र्थे कर्तरि कर्मणि प्रथम एव युष्मदर्थे मध्यम एव अस्मदर्थे उत्तम एवेति यत एवकारस्ततो ऽन्यत्रा ऽवधारणमिति नामाद्यर्थकर्त्रादि नियमो भव
ति न च सपक्तात्वं पाचकः अहं पच इत्यत्र तृण्वादयो न स्युरिति नामाद्यर्थकर्त्रादि नियमादिति वाच्यं वचनसामर्थ्यात्तृजादयो भविष्यति यद्वास
जातीयापेक्षो नियमः नामार्थकर्त्रादौ प्रथम एव भवति न मध्यमोत्तमाविति उच्यते भावे आख्याते सर्वे भागाः स्युः नामार्थकर्त्रादौ विहितत्वा
भावात् अतो भागनियमोऽत्राऽऽश्रीयते प्रथमो नामार्थ कर्त्रादावेव मध्यमो युष्मदर्थकर्त्रादावेव उत्तमोऽस्मदर्थकर्त्रादावेव नान्यत्रेति अस्मि
न्पक्षे नामाद्यनियमात्तस्मिन् कर्त्रादौ तृण्वादयो भवंत्येव ननु अस्मिन्पक्षे भावे प्रत्यये कोपि पुरुषो न स्यान्नामाद्यऽर्थकर्त्रादौ आख्यातस्य विधाना
त् भावे चाऽऽख्याते तदऽभावात् वचनाच्चेत्सर्वेपि स्युरविशेषादिष्यते च प्रथम एवमेवं नामार्थस्य कर्तृत्वाद्यभावेपि वचनबलात्प्रथम एव स्यात्म
ध्यमाऽतिक्रमे कारणाऽभावान्न मध्यमोत्तमौ प्रथमस्याऽप्येकवचनमेव भवति तावता वचनं चरितार्थे द्वित्वबहुत्वयोरभावान्न द्विवचनबहुव
चने स्तः यत्तु उष्ट्रासिकाः आस्यंते उष्ट्रकर्तृकाऽऽसनसदृशान्याऽऽसनानीत्यर्थः हतशायिकाः शय्यंते हतकर्तृकशयनसदृशानि शयनानीत्यर्थः
तत्तु नागनाथवचनप्रामाण्यात्स्वीक्रियते एकवाक्यतया विधिपक्षोप्यऽस्ति तथाहि वर्तमाने तिवित्यादीनां आडुत्तमेत्यादेः नाम्नि चेत्यस्य चैक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यतयावर्तमानाद्यर्थवृत्तेर्धातोर्नामाद्यर्थैकत्र्यादौनिवादीनांयाऽऽत्नोर्नैववचनानित्रिधाविभक्तानिएकत्वाद्यर्थेक्रमेणप्रयोक्तव्यानीतिअत्रापिप
क्षेभावेउक्तरीत्याप्रथमस्यैकवचनमेवभवति अथभागेरितिवहुवचनेनत्रिभिरेवेतिकथंलभ्यतेशृणुकपिंजलानाऽऽलभेतेत्यत्रवाक्येकपिं
जलानितिबहुवचनेपिएकस्मिन्द्वयोश्चबहुत्वाऽऽभावात् प्रथमबहुत्वस्यत्रिषुलाभात्त्रयएवगृह्यंतेनचतुःपंचादयोयथातथानागैरित्य
त्रापित्रयएवभागागृह्यंतेनाधिकाः नन्विहभवान् पचत्वित्यत्रमध्यमःप्राप्नोतिभवद्युष्मच्छब्दयोरेकार्थत्वादितिचेन्नतयोरत्यंभेदात् आ
लिंगः संबोधनविषयश्चयुष्मदर्थः भवदर्थस्तुलिंगवान्नचसंबोधनैकविषयः तथैवहिमाणवकाधीष्वेत्यत्राभिमुखीभावोगम्यते एवंत्व
मधीष्वेत्यत्रापिउक्तंचसंबोधनार्थः सर्वत्रमध्यमःकेश्चिदिष्यतेतयासंबोधनेसर्वोप्रथमोयुष्मदोविदुरितित्वद्रूपःत्वत्कल्पःत्वत्तरःपचसिएवं
मद्रूपःमत्कल्पःमत्तरःपचामीत्यत्रतरादेःविशेषणत्वेनाऽकर्तृत्वाद्युष्मदस्मदर्थस्यैवकर्तृत्वान्मध्यमोत्तमौस्तः अतित्वंप्रियत्वंपचति अत्यहंप्रि
याहंपचतीत्यत्रपूर्वपदाऽन्यपदार्थयोःप्राधान्येनकर्तृत्वात् युष्मदस्मदर्थयोर्गौणत्वेनकर्तृत्वाऽभावात्नमध्यमोत्तमौएवमऽत्वत्वंसंपद्य
तेतद्भवतीत्यादावपिच्व्यंतेहिसंघीभवतिब्राह्मणाइत्यनुरोधेनप्रकृतेःकर्तृत्वविकृतेःकर्तृत्वेतुसंघीभवतिब्राह्मणाइतिस्यात् अत्रापियुष्म
दस्मदर्थयोर्विकृतित्वेनाऽकर्तृत्वंतदुक्तंयदाद्यऽर्थेविनिर्दिश्येभवतोयुष्मदस्मदीद्वयोरपितयोर्योगेनधातोर्मध्यमोत्तमौ प्रकृतेर्विकृतेर्वापिहि
कद्वाभातिपादनेवाचकःप्रकृतेःसंख्यांगृह्णातिविकृतेर्नतु अतएवमृद्घटाभवंति ओदनस्तंडुलाभवंतीतिप्रसज्यतेसचत्वंचपंडितौभवथः
अहंचसचत्वंचपंडिताभवामइत्यत्रत्रयाणांनामाद्यर्थानांकर्तृत्वेनप्राप्तावपिपरत्वान्मध्यमोत्तमौभवतः तदुक्तंएकदाचेत्क्रियाकालसंबंधप्रति
पादनं धातोर्नामादिषूक्तेषुयःपरःसपुमान् भवेत् परत्वंचविधायकसूत्रापेक्षयानप्रयोगापेक्षयाग्राह्यं अस्मदर्थस्यैकत्वेपिसमुदायाश्रितासंख्या
ग्राह्यातदुक्तंद्वयोर्नाम्नोर्वहूनांवायदिवाक्यसमुच्चयःनामत्रयाश्रितासंख्याक्रांतिवाद्योर्विशेषणंसचत्वंचअहंचेतिसहविवक्षायांतुआदेश्चद्वंद्वे इ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तिङाद्ययोर्लोपेऽस्मदः शेषत्वादुत्तमो भवति संख्यातु समुदायाश्रिता भवति प्रत्येकं कर्तृत्व विवक्षायां तु सपण्डितो भवति त्वं भवसि अहं भवामि
अत्र चकाराः किमर्थाः अप्रयुनामार्थैककर्त्रादौ प्रथमः चाद् कर्त्रादौ भावे प्रथमः तत्र द्वित्व बहुत्वयोरभावाद्द्विवचन बहुवचनेन स्तः प्रथमातिक्रमे
कारणाभावादेकत्वाभावेऽप्येकवचनं भवति विधानसामर्थ्यात् युष्मदर्थैककर्त्रादौ मध्यमः चादुत्तमोऽपि क्वचित् अस्मदर्थैककर्त्रादावुत्तमः चात् क्व।
चिन्मध्यमोऽपि तेन परिहासे मन्योपपदात्मध्यमः स्यैकवचनान्तः मन्यतेर्धातोरुत्तमः स एकवच्चेति संगृहीतं भवति त्वं इति मन्यसे अहमोदनं भोक्ष्ये
इति स्थितं तत्र त्वं इति मन्येऽहमोदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः एवं त्वयुवां यूयं वा मन्ये अहमोदनं भोक्ष्यसे आवां भोक्ष्येथे वयं भोक्ष्यध्वे एते प्र
योगाः परिहासे एव भवन्ति तिङः त्रीणि त्रीणीत्यत्र तिङो भागे रितिवक्तुं युक्तं कपिञ्जलाऽधिकरणन्यायेनात्मने पदपरस्मैपदयोस्त्रयस्त्रयो भागाः

॥ णित्ये ॥ ३३ ॥

कर्तव्याः आद्यस्तु प्रथमो भवत्येवं द्वितीयोऽपि मध्यमो भवत्येवं तृतीयस्तु उत्तम इति स्वीकारात् युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि
मध्यम इत्यस्य स्थाने युष्मदि मध्यम इति सुवचम् युष्मदर्थे वाच्ये इति तदर्थः चार्थे वाच्ये द्वन्द्व इतिवत् एवं नाम्नि प्रयुज्यमानेऽपि प्रथम इति।
कातन्त्रसूत्रेऽपि प्रयुज्यमानेपीति व्यर्थं नामार्थे वाच्ये प्रथम इत्यर्थे प्रयुक्ताऽप्रयुक्त शब्दार्थान्तर्भावात् यदपि युगपद्वचने परः पुरुषाणामिति
कातन्त्रसूत्रं तदपि न उक्तरीत्या परत्वेनैव निर्वाहादितिदिक् ३२ पे परे सिणिड्वतिणइत यस्य सणित् अणितणितइत्याह णिद्वदितिगम्यते
परत्र प्रयुज्यमानः परशब्दो विनापि वतिं वत्यर्थं गमयति अवशिष्टो वशिष्ट इत्याह वशिष्टवदिति गम्यते अयं च कार्यस्य प्राधान्यात् कार्यातिदे
शः कार्यार्थत्वादितरेषामतिदेशानां पितः कार्यमतिदेष्टव्यं नास्ति णितियत्कार्यं तदतिदिश्यते ननु आतो णप् औ इणः तनोर्लोप इत्यादि णितः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चं आ
ल भा
१५

कार्यं कुतो नाऽतिदिश्यते मैवं णविधौ णशब्देन विहितं न तु णिच्छब्देनेति नाऽतिदिश्यते यद्वा सामान्यातिदेशे विशेषो नाऽतिदिश्यते णि विषयत्वाद्विशेषः यथा ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यमित्यत्र यदुद्दिश्य गोतमेचतत्त्वाति दिश्यते किंतु ब्राह्मणसामान्यस्य तथात्रापि णिति यदुक्तं कार्यं तदतिदिश्यते अन्त्यस्य नामिनः उपधाया अतश्च वृद्धिर्भवति अकारान्तस्य तु यतेऽइति परत्वाल्लोपः आतश्च सत्यामसत्यां वा वृद्धौ नास्ति विशेषः संध्यक्षरत्वं ऽत्यन्तास्तिअवोढामवोढत्यादौ तु वृद्धिं कृत्वो द्विधीयते इति सकृत्प्रवृत्त्याचरितार्थो वृद्धिः पुनर्न भवतीति नाम धातूनां तु केचिद्विकल्पेन वृद्धिमिच्छन्ति कथुरिवाचारित अकनयीत् कवायीत् मूखिवअभवीत् अभावीत् अगवीत् अगावीत् अतोहसादेर्लो घावदिव्रजिल्लात भिन्नस्य सेटि सोपेवृद्धिं वेच्छन्ति अगदीत् अगादीत् अरदीत् अरादीत् अतः किं अदेवीत् हसादेः किम् अभवोनत्तीत् लघोः

॥ अनिटो नामिवतः ॥ ३४ ॥

किं अतक्षीत् सेटि किं अनाक्सीत् सोऽकिं गदिता पे किं अनभिष्टवदीप्यादि किं अवादीत् अव्राजीत् अफालीत् अचारीत् ह्मंतक्षणश्वसजागृश्वे दितां वृद्धि सेटि सोपेने च्छन्तिअरहीत् अचमीत् अहयीत् अक्षणीत् अश्वसीत् अजागरीत् अश्वयीत् अकटीत् वानुवृत्त्याइदं सर्वं ग्राह्यं शेषस्मातिदेशपक्षेपि धातोर्नामिनः अत उपधाया इत्यनयोरतिदेशादुक्तलक्ष्यसिद्धिर्निर्बाधैवेति दिक् ३३ अनिटः अनामिवत इति छेदः हयमिदं धातोर्विशेषणं यद्यपि धातुः सर्वोप्यनिडेवतस्मेड्विधानाभावात् तथापि न इद्यस्मात्परस्य प्रत्ययस्येति व्याख्येयं पादेशनिड्वनग्रा हित्वा द्वृष्टाभ्यो भिन्नात्परस्य तत्स्य सेड्ढात् तस्मात्तादृशः निङ्ग्राह्यः अश्च नामी चानामिनौ तोऽस्पद्धा इति श्रूयमाणो वतः प्रत्येकं संबध्यते अ वतो नामिवत इति अवर्णे इति चाऽनुपधाकारेण ग्राह्यं उपधाया अतः पूर्वेणसिद्धत्वादंत्यस्य यत इति लोपविधानात् अस्कासीत् अप्रा।

१५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षीत् अजाक्षीत् अचिकीर्षीदित्यत्राऽतः लोपः अनैक्षीत् औत्सीत् अवैषीत् अतौषीदिति तु पूर्वेणाऽपि सिध्यति नच परत्वादनेन विधेय
स्यैकेन विरोधाऽभावात् परेणान्यस्याप्रवृत्तेः ननु वतुग्रहणं मास्तु अनामिन इत्येवोच्यतां विधानबलाच्च पूर्वस्याविषयेऽस्य प्रवृत्तिर्भविष्यति
न च नञ् समासभ्रमः स्यात् अनिटो धातोः सिर्णिदित्युक्ते नामिवतोऽपि प्रसक्तावनामिन इति निषेधः स्यादिति वाच्यं अनिटोऽत इति वक्तुं शक्य
त्वात् मैवं अचिकीर्षीदित्यादौ लोपं बाधित्वाऽतो वृद्धिप्रसंगात् अकारान्तस्य धातोरिति संभवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्य
त्वात् अंतस्य तु नामिनः पूर्वेणापि सिद्धत्वात् तद्वतो ग्रहणं भविष्यति नन्वत्र वतुर्न प्राप्नोति मान्तोपधात् हि धानादिति चेन्न क्वचिदमान्तोपधादपि वत्वि
नोऽस्त्व इत्यनेन ज्ञापनात् तेन तडित्वानित्यादि सिद्धं यद्वा यत्र मोपधत्वं भावि तत्र वतुर्भवतीत्यनेन ज्ञाप्यते तेन शमोऽस्यास्तीति शमी शम्यस्या
स्तीति शमिवान् इत्यादि सिद्धं क्षामिमानित्यादौ तु मत्वस्यासिद्धत्वेन भाविनोऽपि मोपधत्वस्याभावान्न वतु मतोरेव वतुरादेश इति पक्षे तु ना
मिवत इत्यत्र युक्त एव वतुः नलोपे कृते मोपधत्वस्य सत्वात् ननु ज्वलनवद्वानित्यादौ मत्वर्थीयात् मत्वर्थीयो नास्तीत्युक्तत्वादिन्नंतान्न कथं व
तुरिति चेन्न अनामिवत इति समुदायस्येन्नंतत्वाऽभावात् यद्वा मत्वर्थीयाद्विरूपो मत्वर्थीयो भवतीत्यनेन ज्ञाप्यते तेन दंडिमतो शालाकुंजर
वान् ग्राम इत्यादि सिद्धं इत्येवं नेह अरंक्त अस्कंत्त वेटामनिड्भावपक्षे ग्रहणं भवति असाक्षीदित्यादि अकारप्रश्लेषाऽभावे त्विदं न सिध्येत्
नामिवत एव ग्रहणात् नन्वनिट इत्येवास्तु मास्तु नामिवत इति स्वरादेरित्यतः स्वर इत्यनुवर्त्यं तत्र च मत्वर्थलक्षणा ग्राह्या ततश्च स्वरवतोऽनि
टो धातोः सिर्णित् कार्यकृदित्यर्थः इति चेन्नामिवत इत्यस्योत्तरार्थत्वात् एवं तर्हि अनिट इत्यस्याप्युत्तरार्थत्वसत्वाद्योगविभागो मास्तु अनिटो
नामिवतो हशषान्तात् सगित्येक एव योगोऽस्तु णित्य इत्ययं तु सामान्येनोपधाऽनुपधाकारस्यात्यानंत्यानामिनश्च णित्कार्यातिदेशार्थो व्या-
ख्यायताम् इति चेन्न अतोऽसीत् अनैक्षीदित्यत्रैव अगोपीत् असेधीदित्यत्राऽपि नामिनो वृद्धिप्रसंगान्न ह्यनिसधातोर्वृद्धिर्नसिट इति निया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गवत्या नामिवत् इतिसूत्रितं यदितुज्ञापकसिद्धं नसर्वत्रेति जातिग्रहणं नेष्यते तत्रानामिवतइतिसामान्यशब्दस्य विशेषपरत्वं लक्षणीयं ना
मिवत्वं हि आदिमध्यांतनामिना भवतीति सामान्यशब्दः नाम्युपधत्वं तु प्रधाननामिनैव भवतीति शेषः तद्यथा अततांक्षीदिति रूपमिति दिक् आश्लि
ष् आलिंगने इत्यस्य पुषादित्वात् अङ् प्राप्नोतितद्बाधकसको विधानार्थं श्लिष इति वचनं कर्तव्यं स चालिंगने अनालिंगने चङ् स्य बाधकः प्रा
प्तः इष्यते च आलिङ्गने सक् अन्यत्र अङ् आ तितु पूर्वेण सर्वत्र सगेव प्राप्नोति नु सिरते आलिंगने इति नियमार्थं वचनांतरं कर्तव्यं आलिंगन एव स
क् नान्यत्रेति अश्लिक्षत् रामः सीतां अनालिंगने तु समश्लिषज्जतु काष्ठं न चेणमप्ययं बाधेतेति वाच्यं पुरस्तादपवादा अनंतरान् विधीन्बाधं
ते नोत्तरानिति परिभाषणात् उपस्थितलाघवमूलकं चेदं बाधकस्यानंतरेणैव बाध्याकांक्षापूर्तौ व्यवहितग्रहणं नन्याय्यं आश्लेषि सीतारा

॥णेरङ् ह्रस्व॥३६॥

मेण आश्लिक्षातां आश्लिक्षंत सिपक्षे आश्लेषि आश्लिक्षातां आश्लिक्षत आश्लिष्ठाः आश्लिक्षि पुषादिपाठस्त्वनालिंगने अङ् विधानार्थः अ
णेरिति प्रत्ययो गृह्यते प्रत्ययग्रहणे यस्मात्सविहितस्तदादेस्तदंतस्य ग्रहणमिति अंताण्ण्यंताद्धातोः कर्तरि भूतमात्रार्थे दिवादौ परे ऽङ् प्रत्ययो भवति
सेरपवादः अचीकरत् अजिघ्रपत् कर्तरि किं अकारिषातां घटौ कुलालेन अपकर्तरि इत्यतो मंडूकप्लुत्या कर्तरीत्यनुवर्तते भूतमात्रार्थे किं
अकारयेत् दिवादौ किं कारयति ङकारो ङिल्लघाविति विशेषणार्थः ह्रिरिति वाक्यांतरं अत्र ङीत्यनुवृत्तं सप्तम्या विपरिणम्यते क्रियाव
ति गणनार्थात् द्विशब्दात्सुः तेन गण्यमानावचनरूपा क्रिया ऽऽ क्षिप्यते ततश्चाऽऽ ङि परे ण्यंतस्य धातोर्द्विर्वचनं भवतीत्यर्थः तच्च नित्यत्वा
त् णिलोपकृते प्रवर्तते उदाहरणं तु प्रागुक्तवाक्यद्वयबलेन अङ् द्विर्वचनयोः समावेशस्य सिद्धत्वाच्चाव्ययर्थः अतश्चेति वाक्यांतरं त्रिद्वुस्रुक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिभ्योऽन्यंनेभ्योप्यङ् कर्त्तरि भूतमात्रार्थे दिवादेर्द्विश्च अशिश्रियत् अदुद्रुवत् असुस्रुवत् असादेवचकारादनुवर्तितात् धेट् श्विभ्यां वा
ङ् अदधत् अशिश्वियत् ३६ लृ इदस्य सलित पुष आदिर्यस्य स पुषादिः अनुद्भूतावयवः समुदायोऽन्यपदार्थ इत्येकवचनं लिच्च पुषादिश्च
नयोः समाहारः लित्पुषादि क्लीवत्वस्यानित्यत्वान्नुमो वा पुंस्त्वं लितो धातोः पुषादेश्चङ् प्रत्ययो भवति भूतमात्रार्थे दिवादौ परे अगमत् अ
पिषत् अपुषत् अशमत् भूते इति किं अगच्छत् दिवादौ किं गच्छति यियिकं समगत अविक्षत् द्युतादेरित्यपि वक्तव्यमेवं द्युतादयो लित
एव पाठ्याः अनुदात्तत्वार्थं कश्चिदनुबन्धः पठनीय एवं सत्वकार एव पाठ्यः यत्रापि वृतस्य ह्लादौ इङ् विकल्पार्थ उवर्णः पठितस्तत्रापि ङार्थः ल
कारोपि पाठ्यः यद्वा अङ् नुवृत्ति सत्वेङ् विधानं योगविभागार्थं न चाङि सति द्विर्वचनप्रसंग इति वाच्यं सन्नियोगशिष्टन्यायेन ङेराङि सति द्विर्व

॥ लित्पुषादेर्ङः ॥ ३७ ॥ इरितो वा ॥ ३८ ॥

चनं न त्वस्मिन् यथा परोक्षार्थे णादियोगे द्विर्वचनं भवति न तु विदो नवाना मित्यादिविहिते योगे न चाऽङि लघोर्ह्रस्व उपधाया इत्यस्य प्रसंगः
लित्पुषादेत्यघोपधत्वाभावात् द्वित्वाऽभावेन पूर्वस्येत्वाऽप्रसंगाच्च अतो धातोर्ङ् इत्यनेन सूत्रेण लक्ष्यदर्शनात् युतादेर्ङो विधीयते न धातुमात्रा
त् किं चाऽस्यातिवक्तिख्यातीनां लित्वेन न निर्वाहः अातिङ् स्याप्रसंगात् निरास्थत् अवोचत् अख्यत् किं च लिपिसिचिह्वा लित्वेनापि निर्वाहे
प्याऽतिविकल्पार्थवचनारंभप्रसंगात् ङ् इति योगविभागे तु सिद्धमिष्टं पुषादिर्दिवाद्यन्तर्गणो ग्राह्यः लित्साहचर्याल्लितो द्विप्रायेण निर्दिष्ट
साहचर्यात्पुषोप्यनिड् ग्राह्यः स च दिवादिस्तदादिर्गणो ग्राह्यः नभ्वादिः नसद् त्वात् नक्र्यादिः न चुरादिर्जिना व्यवधानाच्च ३७ इरितयस्य सत
स्मात् इरितो धातोर्वाङ् प्रत्ययो भवति मात्रार्थे दिवादौ परे सेरपवादः अरुधत् अरौत्सीत् अविजत् अवैक्षीत् भूतमात्रार्थे किं अवेवेक् अवेविक्त



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिवादौ किमरुणद्धि वेवेत्ति अत्र वर्तमानसमीपे भूतेतिवा द्विविधानादस्तिभूतमात्रार्थतापे किं अरुद्ध अविक्त इरितः किंत्र्चेतीत् ननु ज्रु स्तंभुम्रुचु
म्लुचुग्रुचुग्लुचुग्लुंचुश्विभ्यो ङो विधेय इरित्वाभावात् इतिचेत् सत्यं ज्रुषइरदृवो श्विइरूइत्यादिपाठे एवलाघवं नतु वचनारंभेय ह्यहिश्वेतिचमनु
वर्त्यतमनुक्तसमुच्चयार्थे व्याख्यायतेऽपिग्राह्याइति दिक् ३८ अत्र त्रीणिवाक्यानि विधेयस्यादौ पाठात् प्रथममिणि तितत्रसीष्टत्यादि तेस्यादिस्य
पूसीति चानुवर्त्यसप्तम्या विपरिणमनीय उत्तरसूत्रादकर्तरीत्यः पक्षष्य भावकर्मणो ग्राह्येततश्चसीतास्य पूसि पूपरेषु भावे कर्मणि चार्थे धातो र्वेण्
प्रत्ययः धातोरित्यनेनस्वरांतानां हन् ग्रह दृशां च ग्रहणं योग विभागादिष्ट सिद्धिरिति स्वीकारात् भाविषीष्ट भविषीष्ट भाविता भविता भाविष्यते
भविष्यते कारिषीष्ट कृषीष्ट कारिषीयास्तां कृषीयास्तां कारिता कर्ता कारिष्यते करिष्यते अकारिष्यत अकरिष्यत अकारिषातां अकृषातां घानि

॥ इण् तन्यऽकर्तरि ॥ ३९ ॥

षीष्ट वधिषीष्ट घानिता हंता घानिष्यते हनिष्यते अघानि अवधि ग्राहिषीष्ट ग्रहिषीष्ट ग्राहिष्यते ग्रहिष्यते अग्राहिषातां अग्रहिषातां दर्शिषीष्ट दृ
क्षीष्ट कारिषीष्ट कारयिषीष्ट स्वरांतेत्यादि किं पक्षीष्ट पक्ता भावकर्मणीति किं करिष्यति अकार्षीत् सीष्टत्यादि किं चकृषे चकृढ्वे शिश्यिढ्वे तनीति
द्वितीयं वाक्यं धातोरिण् प्रत्ययो वा भवति तनि परे उत्तरवाक्ये अकर्तरीति पर्युदासादिह कर्तरीति लभ्यते वेत्यनुवर्तते व्यवस्थितविकल्पत्वात्
दीरिण नित्यं दीपजनबुधपूरितायिप्यायिभ्यो वा अपादि अदीपि अदीपिष्ट अजनि अजनिष्ट अबोधि अबुद्ध अपूरि अपूरिष्ट अतायि अतायिष्ट अ
प्यायि आप्यायिष्ट अकर्तरीति तृतीयं वाक्यं कर्तुरन्योऽकर्ता तस्मिन् धातोरिण् प्रत्ययो भवति भावकर्मणि चार्थे तनि परे अभावि अपाचि भिस्सा
अकारि घटः तनि किं अकृषातां भावे इति किं अकृत घटं कुलालः नकारं विना ते इत्युक्ते तु तेत्यादौ मध्यमेऽतिप्रसंगः स्यात् ॥ ३९ ॥ ७ ॥ ७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तनीत्यनुवृत्तं षष्ठ्या विपरिणमनीयं इणितितु पंचम्या इणः परस्य तनो लोपः उदाहरणं तु प्रागेवोक्तं ननु तन इति षष्ठीनिर्देशात् तस्य लोपः स्या
दिति चेन्न आदेरित्यनुवृत्त्याऽदेरपि लोपविधानात् यद्वा लोपो ह्रस्वाज्झस इत्यतो लोपइत्यपकृष्यते तेन ह्वयो लोपः यद्वा लुप्यते इति लोपः
कर्मणि घञ् तनीतितु प्रथमया विपरिणम्यते तेन तनं लुप्यते इत्यर्थः षष्ठ्यभावात् सर्वस्य लोपः क्वचित्तु लुगिति पाठः तत्र सर्वस्य तनो लु
ग्भवति इणः किं अभविष्ट तनः किं भाविषीष्ट ४० हसात्परयोः हिस्योर्लोपः अहन् अनेनेक् हसात्किं अभवत् हिस्योः किं अतिदिपस् हेच
रितस्य सेर्ग्रहणान्नेह अस्तिननु संयोगांतलोपेनैव गतार्थमिदं सत्यं इदमेव ज्ञापयति रात्सस्येति सूत्रमस्ति तेन विभर्भवानित्यादौ संयोगांतलो
पो न स्यादित्यस्यारंभः सिग्रहणमुत्तरार्थं ननु अरोदीत् अरोदद् इत्यत्रातिप्रसंगः हसात्परत्वात् अडीटोः सतोरपि हिसित्वानपायात् यदागमास्त

॥लोपः॥४०॥ हिस्योर्हसात्॥४१॥ अड्रुदादेरट्॥४२॥ अस्तेरीट् ४३॥

ग्रहणेन गृह्यंते इति न्यायात् मैवं अर्थवत्त्वाभावात् कर्तृसंख्यार्थयोर्हिस्योर्ग्रहणात् अडीटोः सतोः समुदायस्याऽर्थवत्त्वेन हिस्योरानर्थक्यात्
यद्वा यदागमा इति न्यायेन विभक्तित्वं प्रत्ययत्वं गृह्यते न हि हित्वसित्वं इरुच्चारणार्थः वत्वसत्त्वजातिवत्त्वस्य समुदायेऽभावात् हिस्योस्तु हसात्
त्वाऽभावात् ४१ रुद् आदिर्यस्य आदश्च रुदादिश्चानयोः समाहारः अतः रुदादेश्च परयोर्हिस्योरडागमः आदत् आदः अरोदत् अरोदः
स्वपश्वस अन जक्ष एवं अदिति किं अयोत् हिस्योः किं अत्ति रोदिति माधवस्तु दिवादावडित्यस्मात्परमदो हिस्योरिति सूत्रमस्तीत्याह तन्मते
वात् अत्र लुट्मात्रं निवृत्तं रुदादेरडितितु तथापि वक्तव्यमेव हिस्योरिति त्वनुवृत्तिलभ्यं ४२ रुदादेरित्यनुवर्तते अड्ग्रहणं तु निवृत्तं क्वचिदेकदे
शोऽप्यनुवर्तते इति स्वीकारात् अस्तेरितितु तत्रादिना व्याख्येयं तेन विद्यमानादस्तेरिति लभ्यते रुदादेश्च परयोर्हिस्योरीडागमः आसीत् आसीः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ओरोदीत् अरोदीः एवंस्वपुप्स्वस्     अनजक्षाः विद्यमानात्किं अस्तेर्भूरित्यादेशो माभूत् अभूत् दिश्योः किं अस्ति अस्तेः किं अदात् ४३
अत्रा ऽस्तेरित्यनुवर्ततेतच्च सर्विशेषणं विद्यमानात् सिप्रत्ययात्परयोर्दिस्योरीडागमः अचेतीः विद्यमानात् किं अदात् अत्र प्रत्ययलक्षणेन सेः प
रत्वमस्ति विद्यमानादिति विशेषणान्नेट् सेः किं अरुधत् अस्यस्योर्माभूत् दिस्योः किं अचेति ष्टायोगविभाग उत्तरार्थः ४४ ह्रस्वात्परस्य सेर्लोपो
भवति झसे अकृत ह्रस्वात् किं अनेष्ट झसे किं अकृषातां सेः किं अशिश्रियत् अत्र लोप इति योगो विभज्यते सगिति स्वरेति चानुवर्तते सको
लोपो भवति स्वरे परे अधुक्षत अधुक्षातां अधुक्षन् केचित्तत्र स्वरे नानुवर्तयंति लोप इति चानुवर्तयंति क्वचित्सर्वस्य सको लोपः तुवयोरा
त्येव अदुग्ध अधुक्षत अदुग्धाः अधुक्षथाः अधुग्ध्वं अधुक्षध्वं अदुह्वहि अधुक्षावहि अधुक्षामहि इत्यादि सिध्यतीत्याहुः ४५ इटः पर

॥ सेः ॥ ४४ ॥ लोपो ह्रस्वाज्झसे ॥ ४५ ॥ इट ईटि ॥ ४६ ॥ झसात् ॥ ४७ ॥ दादेः पे ॥ ४८ ॥ मेऽटः ॥ ४९

स्य सेर्लोपो स्यादीटि अचेतीत् अलावीत् इटः किं अचैषीत् ईटि किं अलाविष्टां ४६ झसात्परस्य सेर्लोपो झसे अरौद्धां अगौप्तां झसात् किं अ
चेष्ट झसे किं अरौत्सुः सेः किं अरुधतां ऽस्य माभूत् लोपो ह्रस्वाज्झसे इति पठितुं युक्तं पृथक्करणं चित्फलं ४७ दा आदिर्यस्य स दादिः त
स्मात् सेर्लोपः पे परे डुदाञ् दाण् दो इत्येतेषां दाशब्देन ग्रहणं दाप् दैपो स्तु न लक्ष्यानुसारात् अदात् धाञ् अधात् अस्थात् इण् अगात् पिबति
अपात् अभूत् शाच्छासाघ्राधेड्भ्यस्तु वा शो अशात् अशासीत् छो अच्छात् अच्छासीत् षो असात् असासीत् अघ्रात् अघ्रासीत् दादेः किम्
गै अगासीत् पे किं अदित अधित से किं दास्यति ४८ मे इति योगो विभजनीयः सिरित्य ऽनुवर्तनीयं माशब्दे प्रयुज्यमाने सिर्भवति स च दिवादिप
रो दृष्टो दिवादिपर एवात्र भवति ननु भूते सिरिति सिर्विहित एव किं पुनर्विधानेनेति चेत् सत्यं स भूते विहितः कालांतरेत्वनेन विधीयते तेन सर्वेषां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माऽख्यातानांविषयेसिर्भवतिमाशब्दयोगेमाशब्दोऽव्ययंनास्तीतिमाशब्दोगृह्यतेप्रयोगेङ-काराऽश्रवणात्तङि-द्ङि-ह्याव्याकरणांतराऽनुरो
धात्तुङि-देववाग्राह्यः अटइति द्वितीयोयोगः मेइतिलोपइतिचानुवर्ततेमाशब्देप्रयुज्यमानेसत्यटोलोपः मामवान्भूत्माभवान् भवत्से
किंनाभवत् अटः किंमाश्रभूत् प्रस्यलोपेन ४९ उवर्णात्परस्यहेर्लोपः वेतिनविकल्पार्थं किंतुप्रत्ययसंबंधिनोऽसंयोगपूर्वादित्यस्याऽर्थस्य
प्रतिपादनार्थं उकारश्चप्रत्ययावयवः प्रत्ययरूपश्चगृह्यते सुनुतनुप्रत्ययसंबंधिनः किंयुहिकृहि असंयोगपूर्वात् किं शक्नुहि ओः किं
क्रीणीहिहेः किंननुथः ५० हेर्लोपः भवअतः किंयुहिरुहितपरः किंयाहिहेः किंभवतः नात्तङोपिस्थानिवद्भावेनहिलात् मामोलोपाव्रत्य
नुवृत्त्याव्यवस्थितविकल्पाश्रयणान्नयद्वातद्भावोन्यायसिद्धोज्ञापकसिद्धोवोभयथाप्यनित्यत्वान्नात्तङि- हिलनाऽऽयातियद्वासकृत्

॥ ओर्वाहेः ॥ ५० ॥ अतः ॥ ५१ ॥ अदे ॥ ५२ ॥

तौविप्रतिषेधेयद्वाधितंतद्वाधितमेवेतिनतातङोलोपः तातङोऽवकाशस्तुअतात् हिलोपस्यावकाशः अरणार्थेतातङ-भावपक्षे आशि
षोऽर्थेतातङ्-पक्षेतूभयप्रसंगेपरत्वात् पूर्वविप्रतिषेधाद्वातातङ- ५१ अच्चएवेतिपृथक्पदेवाऽनुकार्याऽनुकरणयोरभेदविवक्षयावि
भक्त्यनुत्पत्तिः अतइतीहाऽनुवृत्तषष्ठ्या विपरिणम्यते अतोलोपोऽनिएतिचपचंतिपचेअन्नः किंब्रुवंतिब्रुवंतपरः किंयांतिएच्यवंतेच्यवे
इत्यत्रच्युअअतेएइतिचस्थितेलोपात्परत्वाद्यद्यपिगुणः प्राप्तस्तथापिनित्यत्वाद्लोपःअकृतेङि-त्परत्वाद्गुणोनस्यात् मेवंप्रत्ययलक्ष
णेनगुणसंभवात् युतइत्यादौतुलुकिनतन्निमित्तमितिनगुणः यद्वाप्रकृतिप्रत्ययाश्रितत्वेनपूर्वपूर्वमतरंगमितिवांतरंगत्वेनगुणः अदे
किंभवति आख्यातप्रकरणात्पूर्वंतरत्नाऽऽख्यातस्यादेशविधानाच्चाऽदादिरेदादिश्चाख्यातप्रत्ययएवग्राह्योनेहदेवात्रदेवैषायत्नुमाध



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेनोक्तं धातुप्रत्ययेषु यस्य लोप इत्यऽस्याऽप्रवृत्तिरनेन ज्ञाप्यत इति तन्नतद्धितप्रकरणादेव तस्याऽत्राप्रवृत्तेः सिद्धत्वात् ५२ वचम् वचो
तयोः परयोरत आ भवति भवामि भवावः भवामः अतः किं चिनुवः चिनुमः वमोः किं भवथः भवथ उक्तरीत्यानेहराभवावुः ५३ आद्य आद्य
आदात् तस्य आते आतां आथे आथां इत्येतेषां टिं विहायाऽनुकरणं अतः परस्य आतः आथश्चात् इर्भवति एथे एते एधेतां एधेथां आद्
थः किं भवाव भवाम आ किं अन्त्यस्य मा भूत् अतः किं ब्रुवाते ब्रुवाथे तपरः किं गाते अन्तरंगत्वादपः सवर्णदीर्घे कृते पुनः सवर्णदीर्घः ५४
आनुकार्याऽनुकरणयोरभेदविवक्षयाऽविभक्तिको निर्देशः अतः परो याइ भवति भवेत् भवेतां पक्ष्याऽभावाचान्त्यादेशः जसीतिवत् अतः
किं युयात् तपरः किं पायात् या किं भवंतां ५५ अतः परो या मियं भवति भवेयं अतः किं युयात् तपरः किं या यां यामं किं भवति ५६ अतः परस्य

॥ आरा ॥ ५३ ॥ आ दाथइ ॥ ५४ ॥ या ॥ ५५ ॥ या मियं ५६ युसइट् ५७ ओर्वमोर्वालोपः ५८ कृञोऽये ५९ डि-त्यद्रुः ६०

युस इडागमः भवेयुः टित्वादत्यमाऽगमोऽन्यथाइरित्येवाऽनुवर्तयेत इड्ग्रहणं च नाऽकरिष्यत् ५७ उकारप्रत्ययस्य उकारांतप्रत्ययस्य
चाऽसंयोगपूर्वस्य वा लोपः वमोः परतः ओर्वा हेरित्यतो वेत्यनुवर्तते तस्य चाऽसंयोगपूर्वस्य प्रत्ययस्येत्यर्थः सुन्वः सुनुवः सुन्मः सुनुमः तनु
वः तन्वः तन्मः तनुमः सुनो मितनो मीत्यत्र तु परत्वाद्गुणो भवति प्रत्ययस्य किं युवः युमः असंयोगपूर्वस्य किं शक्नुवः तक्ष्णुवः वमोः किं सुनुतः
ओः किं अक्ष्णुधहि ५८ कृञः परस्य प्रत्ययस्य लोपो वमोश्च कुर्यात् कुर्वः कुर्मः अत्र वमोरित्यनुवृत्तिसामर्थ्यान्नित्यो लोपः माधवस्तु कृञो
ऽये इत्यत्र कृञ इति योगविभागः कर्त्तव्यः तत्र ओर्वमोर्लोप इत्यनुवर्तते न विकल्पो योगविभागसामर्थ्यादित्याह ये किं कुरुतः कृञः किं सुनया
त् ओः किं अकृषहि ५९ कृञो तडः स्यान्डि-तिउपपरे गुणे कृते कृञोऽभ्यते कुरुतः कुर्वंति अत्र य्वोर्विहसे इति दीर्घो न संज्ञापूर्वकत्वात् कृ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जः किंभवतः ङि॰ति किं अकत्वं अत् किं ऋतः गुणेकृतेरेफस्यवामाभूत् परः किं अकार्षं कुरुतइत्यादौयथा द्वाभ्यांव्यवधानेभवतितथा ऽत्रापिस्यात् किंचतपरत्वमुकारार्थमपिउकारे इनिकृतेमिनोगुणोमाभूत् ओरित्यनुवृत्तौतुकरणंनपरत्वार्थमेवतुपरत्वमसंदेहार्थमि तिमाधवः तन्नङि॰त्मउरितिपाठेपिसंदेहाभावात् ६० नाआतेइतिच्छेदः येतिवर्नेस्याविभक्तिकंनाप्रत्ययस्याऽऽतोलोपोङि॰तिहसेईवि धानात् परिशिषात् स्वरेलोपः क्रीणंतिक्रीणातेनाकिंयातिङि॰तिकिंअक्रीणांआतः कियतीकारवन्तसर्वस्यमाभूत् यदितुनेतिषष्ठी व्याख्यायतेतर्हिद्वेरित्यत्राऽर्थस्पष्टार्थमिहेवकृतंआतइतिषष्ठीव्याख्यानक्लेशोमाभूत् ६१ नाप्रत्ययस्याऽऽतईः स्यात्ङि॰तिहसेक्री णीतः क्रीणीहिङि॰तिकिंक्रीणासिहसे किंक्रीणंतुनाकिंयातः ६२ द्वेरुच्चारणेस्तोऽस्यातिद्विरस्मादेवज्ञापकान्मत्वर्थीयः इः यस्यलोपः य

॥ नातः ॥ ६१ ॥ ई हसे ॥ ६२ ॥ द्वे स्तो ॥ ६३ ॥

द्वाद्विर्वचनमस्यास्तीतिमत्वर्थीयइः अव्ययस्यतद्धितयस्वरयोष्टिलोपइतिलोपः क्त्वोर्थसुप्रत्ययांतस्याऽव्ययत्वात् एतस्यवचनस्यस त्वेयंचनिर्देशोलिंगवहिर्भवोवाद्यः सोवः इत्यादौनिर्वासिध्यंतियद्वाद्विरकारिणिङि॰त्करणेस्वतस्यटिलोपः औणादिकेइप्रत्ययेञिलोपः यद्वाद्वेकयोरित्यत्रेवसंख्यामात्रवचनोद्विशब्दोस्तिसंख्येयार्थत्वंतुद्वेकेष्वितिस्यात्तस्यचमत्वर्थलक्षणयाद्वित्ववान् धातुर्गृह्यतेद्वित्वं चोच्चारणंविनानसंभवतीति तदाक्षिप्यतेन्यदाद्वित्वंतुनभवतिगौणत्वात् द्विरुच्चारितस्यधातोरातः ईलोपोङि॰तिमिमीतेमिमतेजिहीतेजिहते द्विः किंवातः वांतिङि॰तिकिंजहातिअजहाम् धातोः किंहाहोमाधवस्तुद्वेरूपेविद्येतेयस्यासौद्विजस्मात्तद्वेरितिसहाद्वेरितिद्विमत् शब्दस्या ऽस्यर्थेमत्वतस्याऽत एवलिंगात् द्विशब्देशइत्याहयत्तुयथाशुक्लगुणवान् शुक्ल इतिशुक्लवत् शब्दस्यशुक्लादेशइत्याहतन्नअभेदोपचा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रेणास्तु क्वाविति अप्रत्ययेन वा सिद्धत्वात् तावितिकिमर्थं ईलोपयोरनुवृत्तेः सत्वात् मैवं अनंतरत्वादीरनुवर्तते नलोपः ननु तर्हि हेश्चेति पा.
ठ्य अनंतरत्वादीश्वाल्लोपोऽनुवर्तते मैवं ङितिहसेल्लोपः ङितिस्वरे ईरिति विपर्ययस्यापि संभवात् तावित्युक्तं तु यादृशो पूर्वत्र दृष्टो तादृशोऽत्र
स्त्विति न दोषः ६३ नमश्च असश्च अनयोः समाहारो नमसं तस्य नमिति प्रत्ययो गृह्यते प्रतिपदोक्तत्वात् न धातुर्लाक्षणिकत्वात् स्य हि आः
दः सश्च इति तेन मिति रूपं प्रतिपदोक्तं शीघ्रबुद्ध्यारूढं भवति लाक्षणिकं तु लक्ष्यानुसरणद्वारेणेति विलंबोपस्थितिकत्वान्न गृह्यते प्र
त्यया प्रत्यययोर्ग्रहणे संभवति सति प्रत्ययग्रहणस्य न्याय्यत्वात् तस्य प्राधान्यात् असिति प्रत्यय औणादिको न गृह्यते उणादीनामनुक्तचिह्न
त्वेति कार्याभावात् अत एव कसेन पयइति न भवति धातुरपि असदीप्तौ असुक्षेपणे न गृह्यते विकरणव्यवधानेन ङितपरत्वाभावात् न

॥ नमसोऽस्य ॥ ६४ ॥

मो विकरणस्य ङितोऽसंभवात् यथा तिवादेर्ङितो ग्रहणं तथाऽसधातोरप्येतादृशोऽसभुव्येव नन्वस्तेरपि कथं ग्रहणं लुग्विकरणात् लुग्वि
करणयोः लुग्विकरणस्यैव स्वीकारादिति चेन्न एतद्वचनस्य न्यायस्य वात्राभावात् अस्त्यैव साक्षाद्ङित्परत्वसंभवाच्च यद्वा अस्तेरीडित्यत्र असेरि
त्यनुवृत्त्यै अस्तेरिति रूपस्य प्रकृतिभूतोयोऽसिति व्याख्यानात् माथवस्तु ननु किमर्थं नमिति नेत्यर्थो धातुर्गृह्यते विकरणो वा युक्तं तत्रास्ति धातु
साहचर्याद्धातुग्रहणमिति तन्न असधातोर्ग्रहणमिति निर्णयाभावात् अस् प्रत्ययग्रहणस्यापि संभवात् यदपि सत्यं अस्तेस्त्वनपि भादेशेन
प्रयोगाभावाद्विषयो विभक्तिचतुष्टयमस्य सूत्रस्य निमित्तमनुमीयते इत्युक्तं तदपि न भविता भविष्यति इत्यादौ स्यानिवद्भावेनासिद्धत्वादऽका
रस्य च श्रूयमाणत्वात् शास्त्रप्रवृत्तिसंभवात् ङित्परत्वाभावादिति वक्तुं युक्तत्वात् णवादियादावोः किन्त्वनङित्वं सिस्योस्तु तादिपर्युदासात् न

ङि॰त्वस्यपस्तुपित्वात् यदपिनचात्रङि॰त्यनंतरोनमतिःसंभवतिअपाव्यवधानात् नमनीत्यादावप्यल्लोपस्यनहुङावात्तदवस्थमेवव्यवधानमि॰
त्युक्तंएवमेवास्तेरपिवक्तुमुचितं यदपिनापियेननाव्यवधानमितिन्यायस्याप्ययंविषयः वचनस्यविकरणग्रहणेनापिचरितार्थत्वादित्युक्तंत
दपिनधातुग्रहणेहेतुत्वेनोक्तस्यसाहचर्यस्याऽदूषितत्वात् प्रत्ययग्रहणेहेतोरप्रतिपादनाच्च यदपिनचात्रापिधात्वक्षरेणव्यवायइत्याशं
क्यविधिकालएवमस्येत्संज्ञातःप्रागऽलोपात्पश्चाच्चमित्वेनात्यस्वरात्परत्वमित्युक्तंतदपिनविधिकालेइत्यस्यसूत्रएवेत्यर्थःप्रयोगेवा
नाद्यःसूत्रेङित्परत्वासंभवात् मस्येत्संज्ञातःप्रागल्लोपविधानेमकारव्यवस्थानस्याऽपरिहरणीयत्वाच्चनात्यः मस्येत्संज्ञाभावेनात्यस्वरात्पर
त्वाऽसंभवात् धातोःपरत्वप्रसंगात् अक्षरेणोत्पस्यस्वगतहसहितस्यस्वरस्याक्षरत्वांगीकारात्द्वात्रिंशदक्षराण्यनुष्टुबिति व्यवहारात् धा

॥स्निसः॥६५॥

तुवर्णेनेतिवक्तुंयुक्तत्वाच्च यदपिसूत्रेप्येवंनमसइतिमकारनिर्देशउपपद्यते अन्यथानासइत्येववाच्यंस्यादित्युक्तं तदपिननासधा॰
तोर्ग्रहणप्रसंगात् किंचधानायेइत्यादौनाप्रत्ययाऽकारस्यापिलोपप्रसंगात्नआसइतिच्छेदेनआसेःपरस्यनस्यनस्यासीनायेत्यादौच्च
ल्लोपस्यसंभवात्रुंधःरुंधतिस्नःसंतिनमसःकिंभवतःअपोनल्लोपःङितिकिंरुणद्धिअस्तिअस्यकिंअस्तेरत्यस्यमाभूत् अत्राऽस्येति
चिंत्यनातइत्यत्रनास्येति पठितुंयुक्तंअस्येत्यस्यतत्रानुवृत्तिसंभवात् एवंचधात्ववयवेनव्यवधानात्वन्मतेकथंनमोङित्परत्वमेवंनमःङि
त्परत्वाविवक्षणान्नमःप्रकृतिभूतस्यधातोर्ङित्परत्वस्याविवक्षणात् धातोर्ङितिपरेइतिदिक् ६४ असग्रहणमनुवर्तते ननमसकाराभावाद
स्तेःसस्यलोपे सकारेऽसिद्ध्यतीसे अन्नेर्वाहेरित्यतोहेरित्यनुवर्ततेशब्दाधिकारश्चाऽयंहएरितिच्छेदःअस्तेःएकारसंबंधिनःसस्यहःस्यादि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तिवाक्यभेदेनव्याख्येयं एकारसंबंधश्चततोव्यवहितपूर्वत्वंतेनव्यतिहेइ इति सिद्धं अते: किं वसेसि किं अस्तिसः किं अस्यमाभूत् नवाऽस्य
पूर्वेणैवसिद्धे: पित्यसिद्धत्वादितिदिक् ६५ अतिअतेअतांअतेत्येतेषांपंचानां टिं विहाय प्राग्भावस्यानुकरणं आदितितु अत्यानां नवानां से
इत्युक्तं आत् संबंधिनोऽनकारात् परस्यांताद्भवति रुंधते सुन्वता आतः किं युवति अतः किं रुंधातोअनतः किं एधेतेतत परः किं गातेगाअ अते
इतिस्थिते शक्तत्यासहांतरंगत्वाद्दयः सवर्णो दीर्घः पश्चाद्दत् अनत् इति पर्युदासो लाघवात् प्रसज्यप्रतिषेधेत्वऽनन्वितसमासो वाक्यभेद-
श्चाऽऽश्रितः स्यात् ६६ पूर्ववत्प्रक्रियाद्विरुक्तात्ड्ढातोः परस्यांताद्भवति पायेमिदं आतितु पूर्वेण सिद्धं जुहति जहति नेनिजति दे: किंयुवंति अतः।
किं जुहुतः ६७ द्विरुक्तात्परस्याऽनउस् भवति अजुहवुः अनेनिजुः द्विरुक्तात् किं अब्रुवन् अनः किं अजुहवउसित्यावर्तनीयं लोप आत् इति चा

॥ आतोऽनोदनतः॥ ६६॥ द्वेः॥ ६७॥ अनउस् ॥ ६८॥ स्याविदः॥ ६९॥

ऽनुवर्तनीयं उस्याकारस्य लोपः अदुः अधुः ६८ सिश्च आश्च विच्च एषां समाहारः स्याविद् तस्मात् अत्रवाक्यत्रयं सेरित्याऽऽद्यंवाक्यं तत्रसि
प्रत्ययो गृह्यते प्रत्ययाऽप्रत्यययोरितिन्यायात् विकरणव्यवधानाद्धातोः परस्याऽनो संभवाच्चेअचेतिषुः अत्राऽसेरित्यनुवृत्यविद्यमानात्सेरिति
व्याख्यानात्नेह अभूवन् प्रत्ययलक्षणेन सेः परत्वात्प्राप्तिः सेः किं अतन्वन् अनः किं अचेतिष्टां आ इति द्वितीयं वाक्यं आकारात्परस्याऽनउ
स् अदुः यदि त्वत्र वाक्ये सिग्रहणमनुवर्तते सेः आकाराच्च परस्याऽनउस् प्रत्ययलक्षणेन सेः परत्वं श्रुत्या चाऽऽकारात्परत्वं तदेदं नियमार्थं भव
ति प्रत्ययलक्षणेन सेः परस्य यदि भवति तर्ह्याकारादेवेति अत्रपक्षेऽनद्यतेनेन भवति प्रथमवाक्यरीत्यातु भवतितेन विकल्पः फलितः अपुः अ
पान्चेत्यनुवृत्याद्विषोऽपि संग्रहः अद्विषुः अद्विषन् आतः किं अदुहन् अनः किं अदात् विद् इति तृतीयं वाक्यं विदेः परस्याऽनउस् अविदुः अ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमात्रेतुसेरित्यनेनैवसिद्धंपुनः विड्ग्रहणंअनद्यतनेअनउसविधानार्थम् विदेः किंअदिहन् अनः किंअवेदंअत्रसिविदः इतिसूत्रणीयंततः आतइतिसूत्रणीयंततोणल्डौविति इत्थंचाकारग्रहणंनकर्तव्यमितिलाघवं एवंकृतोवक्तृतमितिचित्य ६९ आतइत्यनेनधातोर्विशेषणात्त दंतविधिः आदंताद्धाऽऽकाररूपाच्चधातोः परोणल्डौभवति ददौ औ अइवाचचोरितिविग्रहेअणवितिस्थितेअस्याहिलंआम्वारित्यात्वंसवर्णे दीर्घः अनेनऔ आतः किंनिनायतपरः किंकइवाचचारचक आदित्युक्तेतुस्यात् अत्रआइतिपंचमीनिर्देशोयुक्तोव्यर्थः लः चुकेत्यादौपरिप रत्वाल्लोपस्तदाऽऽदितिर्दिशेपिनक्षतिः एपुकिंददाथअऔइत्येवास्तुतर्हिमध्यमपुरुषबहुवचनेएवस्यात् निरनुबंधकग्रहणेनसानुबंधक स्येतिन्यायात् तर्हिणइत्येवाऽस्तुतर्हिज्वलादिणप्रत्ययेअवश्यायअवस्यायइत्यादावेवस्यात् एकानुबंधग्रहणेनद्व्यनुबंधकस्येतिन्यायात् त

॥ आतोणल्डौ ॥७०॥ आदनुदात्तङितः ॥७१॥

र्हिअवित्येवास्तुनचणातेइत्यादावेवस्यात् णाअंतइतिस्थितेअपः सवर्णदीर्घोजायतेएकानुबंधकन्यायात् अतोणवित्युक्तेनचपकारा द्न्येनद्वितीयाऽनुबंधेनसिद्धिः उत्तमपुरुषेणित्वाभावेकित्कार्यप्रसंगात् चकरेत्यादौचुक्रेत्यादिस्यात् अथउकारः किमर्थं औरेवविधी यतां आवितिकृतेआतोयुक्प्रसंगः नचणित्वाभावान्नसःस्यानिवद्भावात्स्यानिवत्वेचेदउग्रहणमपिज्ञापकंइत्थंआतोयुगितिसूत्रेचि णकृतोरितिव्यर्थंतस्मिन्नेवसूत्रेऔएतस्यडित्वेनैवसिद्धत्वात् ७० अनुदात्तश्चइङ्चानुदात्तङौतौइतौयस्यधातोःसोऽनुदात्तङित्तस्मा त् इहांते श्रूयमाणइत्शब्दः प्रत्येकमभिसंवध्यतेयत्तुमाधवः निर्देशस्यसौत्रत्वादल्पस्वरस्याऽपिङशब्दस्यपरनिपातइत्याह तन्नङस्य हसांतत्वात् स्वरांतत्वेतुएत्वेऽनुदात्तङतइतिस्यात् स्वरितेतइतिवत्तद्वयोः स्वरांतयोर्मध्येऽल्पस्वरस्यग्रहणात् रायायनणित्यादिज्ञापकासि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इहितत्ज्ञापकसिद्धंनसर्वत्रेतिदेवंतेदमर्थइत्यादिनाचतस्यानित्यत्वाच्चअनुदात्तेतोङितश्चधातोरात्‌ राधेतेश्नोते अनुदात्तङितइति किंभव
ति अन्यपदार्थत्वेनधातोराश्रयणे किंआगमत्‌ अशिश्रियतङाऽङोङिःलोपिधातुत्वाऽभावाद्वान्यत्तुमाधवः नचैवंयङःतादपिनस्यादितिवा
च्यङित्वस्ययुङिःकृतार्थत्वेनाऽसमुदायार्थत्वात्‌ अवयवेहिचरितार्थलिंगसमुदायस्यविशेषकंनभवतीत्याहतन्नयङः तस्याऽपिधातु
त्वेनपूर्वपक्षस्योक्तिसंभवाभावात्‌ यदपिएवंतर्हिप्रायोविवक्षयाधातोरित्युक्तमित्युक्तम्‌ तदपिनयङःतस्यधातुत्वेनप्रायोविवक्षयेत्यस्य
असंभवात्‌ यदपिङाऽङोस्तुपरस्मैपदप्रवृत्त्यनन्तरंप्रवृत्तेनङित्वेनङिःलोपिआत्मनेपदंनभवतीइत्युक्तंतदपिनङाऽङोधातुत्वाभावेनतदं
तात्ततःप्राप्तेरेवाऽभावात्‌ यदपिसूत्रेचाऽऽदितिनामैकदेशेनाऽपिसर्वेनामलक्ष्यतेभामासत्यभामाभीमोभीमसेनइतियथेत्युक्तंतदपि
नआत्मनेपदपरस्मैपदशब्दयोरेवसंज्ञात्वेनविधानात्‌ तयोरेवसर्वत्राऽऽवृत्तिदर्शनात्‌ आत्मनेपदपरस्मैपदशब्दयोःक्वचिदप्यऽदर्शनाच्चदृष्टान्तोऽपि
विषमः भीमभीमसेनशब्दयोर्द्वयोरपिपृथक्‌संज्ञात्वेनविनियोगात्समुदायस्यविनियोगेपिपूर्वोत्तरपदयोर्लोपविधानाच्चयद्यपि
अनुदात्तङितआदितिवक्तुंयुक्तंलाघवाद्विधेयस्यपश्चाद्ग्रहणस्ययुक्तत्वाच्चतथापियोगविभागार्थंविपरीतग्रहणंधातोःक्वचित्‌
इवनिकोजानीतेमुण्डोभीषयतेइत्यादिसिद्धं अथकिमर्थमिदमारभ्यतेवर्तमानेतिवित्यादिनादशविधाआख्याताविहिताएवंते
षामाङ्वीत्यादिनाऽर्थोऽप्युक्तोएवेतिचेत्‌ उच्यते आङ्वीत्यादिनाऽऽख्यातानामर्थनियमःकृतःधातुमात्राद्भावकर्मणोरादेवेतितेन
धातोर्भावकर्मणोःपदेस्यर्थनियमःसिद्धःकर्तरिपचेत्येनेनकर्तरिआख्येविहितेतत्रकिंधातुमात्रात्कर्तरितेभवतःकिंवाकस्माच्चिदि
तिसंदेहः तत्रप्रकृतिनियमार्थंपंचसूत्र्याऽऽरभ्यतेअनुदात्तङितआदेवेतिनिविशादेरादेवेति यत्तएवकारस्ततोऽन्यत्राऽवधा
रणमितिप्रकृतिनियमःफलितोभवतितेनेभ्यःपन ७१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चं॰ आ॰
लं॰ भा॰
२३

निपूर्वो विशः नेः परइ निवा विशेश्च इत्युच्चारणार्थः निविशआदिर्यस्य तस्मात् असंदेहार्थं वा पदकार्यस्य वारणमन्यथा निविडादेरित्यु
के विशिरित्युक्तो विडभेदनइतिवा संदेहः स्यात् आदिशब्दः प्रकारे तेन निविशप्रकारा निविशसदृशा उपसर्गपूर्वा धातवो गृह्यन्ते व्यवस्था
वाचिग्रहणं तु न निविशादिगणाभावात् निविशते अत्र निरुपसर्गो गृह्यते धातोः पूर्वोच्चारणात् नेह नयमियत्कुलं तन्निविशति विजयते ने
हवेति यत्कुलं तत् विजयति पराजयते नेह पराजयति दूरामानोतमा पराः आदत्ते नेह आयच्छति अद्यति अत्ततीति अतेर्डः स्त्रः स्त्रियामपि
आशक्ति ददातिवाक्यस्मरणयोर्वाऽऽकारः अनुक्रीडते संक्रीडते नेह बालमनुक्रीडति बालेन सह क्रीडतीत्यर्थः ७२ ञ् इत् यस्य स ञित् स्व
रित् इत् यस्य स स्वरितेत् ञिच्च स्वरितेच्चानयोः समाहारः ञित्स्वरितेत् तस्मात् उभेपदे आत्मसन्निहितमेव पं तु णित्ये इत्यतः परामृश्यते य

॥ निविशादेः ॥ ७२ ॥ ञित्स्वरितेतउभे ॥ ७३ ॥

हा आदित्यनेनैव यमाक्षिप्तं परस्य पूर्वापेक्षत्वात् पूर्वाण्येव पं संज्ञानीत्याक्षिप्यते माधवस्तु क्रमस्तु न भवति ञित आत्मनेपदं स्वरितेतः प
रस्मैपदमिति सूत्रारम्भसामर्थ्यात् अन्यथा हि ञितो ञः स्थाने ङकारोपदेशेन ङित इत्येव सिद्धमात्मनेपदं स्वरितेतस्तु परतोऽन्यदित्येव प
रस्मैपदमपि सिद्धं किमस्यारम्भेणाय दितु ञितोय स्वरितेत आदिति क्रम उच्यते तर्हि ञितो ञकारत्यागे नये सिद्धं स्वरितेतामनुदात्तेत्त्व पा
ठेनापि सिद्धं किं सूत्रेणेत्याह इदं चार्थसाम्यपक्षे उक्तं उभयशब्दस्य द्वयाभिधायित्वात् शब्दतः साम्यपक्षे तु यथासंख्यप्राप्तिरेव नास्ति उ
भइत्येकः शब्दः ञित्स्वरितेत् इति द्वौ यद्वा नाऽत्र यथासंख्यवचनमस्ति किंतु ज्ञापकसिद्धं ज्ञापकसिद्धं न सर्वत्रेति न भविष्यति यद्वा सूत्र
णोपस्थितस्य क्रमस्य बाधकं विना बाधो न युक्तोऽतु लक्ष्यासिद्धिर्वा धात्मज्यते अत्र चाऽनुबन्धद्वयं त्याज्यं एकेनैव निर्वाहात् ञितोऽपि

२३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वरितेत एव पाठ्याः स्वरितेत उभ इति च सूत्रणीयमिति चेन्न डुकृञित्यस्य स्थाने डुकृञ् इत्यादि पाठे गौरवप्रसंगात् तर्हि स्वरितेतोऽपि ञि
त एव पाठ्या ञित उभे इति सूत्रणीयमिति चेत न रुधिरित्यादौ रुधिर् ञ् न तनु ञ् इति पाठे गौरवप्रसंगात् न चैरिति त्यक्तुं शक्यः ङार्थं तस्याऽव
श्यकत्वात् उकारस्य उदितो वेति इड्विकल्पार्थं आवश्यकः एवं पूर्वसूत्रेऽपि ङितोऽनुदात्ता न पठितुं शक्याः शीङ् स्वादौ शीञ् इत्यादि पाठे गौ
रवप्रसंगात् न चानुदात्ताङितः पाठ्याः एधङ् इत्यादौ गौरवात् अकारस्योच्चारणार्थस्यावश्यकत्वात् न चाऽकारेण पाठ्य एधङ् इत्येव
पाठ्य एवं तर्हि ङित्वेनैव सिद्धे यदनुदात्तेत्वं करोति तद् ज्ञापयत्यस्ति चेहानुदात्तेत्वप्रयुक्तं कार्यांतरमपि तच्चानुदात्तेतश्च हलादेर्युः शीलेइ
ति तेन विचक्षण इत्यादि सिद्धं चक्षिङोऽनुदात्तेत्वात् न चैवं चक्षिङो ङित्वव्यर्थं अनुदात्तेत् प्रयुक्तं कार्यमनित्यमिति ज्ञापनार्थत्वात् ते
नाय गतावित्यादेः यतीत्यादि सिद्धं किंच चक्षिङित्यत्र ङकारविशिष्टः पाठः सोऽयुक्तः नुम्प्रसंगात् न चानेद् इदितो नुम् विधीयते इदित इत्य
त्रात ग्रहणाऽभावात् गृहीतेवातस्मिन्नितोत्मत्वसंभवात् आद्युच्चारणेऽत इति पाठे तु गौरवदोषः अतोऽकारविशिष्ट एव पाठो युक्तः अत्र च
ऽनुदात्तङित इतिवत्स्वरितञित इति पाठो युक्तो लाघवात् अत्र माधवः आत्मशब्दाभ्यामवयवाभ्यामात्मनेपदपरस्मैपदसंज्ञे गृह्येते ते चा
ऽन्वर्थे आत्मने कर्त्रे फलबोधकं पदमात्मनेपदं परस्मै कर्त्रे फलबोधकपदं परस्मैपदं तेन कर्तृगामिनि फले आत्मनेपदं परगामिनि फले प
रस्मैपदमित्याह तन्न उभयग्रहणवैयर्थ्यप्रसंगात् तथाहि ञित्स्वरितेत एतावदेव सूत्रमस्तु आदिति चाऽनुवर्तनीयं तेन कर्तृगामिनि क्रियाफले
आत्मनेपदं अन्यत्र परतोऽन्यदिति परस्मैपदं किमुभयग्रहणेन परत इति तत्स निर्देशोऽर्थद्वयसंग्रहार्थः परस्माद्धातोः परस्मिन्नर्थे इति अन्य
थापरा रित्येव ब्रूयात् किं तस्याऽन्वर्थता च परेषामपि न सम्मता स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्याहुः अन्यथाऽन्वर्थत्वादेव तत्सिद्ध
ध्येकिं कर्त्रभिप्राये क्रियाफले इत्यनेन न च क्रियाफलस्य कर्तृगामित्वं शाब्दबोधे भासते पचतीत्यस्य हि एकाश्रितो विक्लित्त्यनुकूलो व्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाद् इति हि बोधः न चाऽत्र फलस्य कर्तृगामित्वपरगामित्वे वावगम्येते न संभवन्त्यपि तत् करोति कुरुते वा घटमित्यत्र घटनिर्माणफलस्य कु
लालादन्यगामित्वस्याऽसंभवात् एवं सृष्टिं चकार चक्रे वा ईश्वर इत्यत्र जगन्निर्माणफलस्येश्वरेऽसंभवाच्चनन्वेवं यष्टा यजते यजन्ते इ
त्यादिप्रयोगव्यवस्था कथमिति चेत् शृणु श्रुतिबलात् तथा हि ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रुत्या यजमाने आत्मनेपदं प्रयुक्तं होतायं
जेति श्रुत्या ऋत्विजि परस्मैपदं प्रयुक्तं तदनुयायी लोकोऽपि तथैव प्रयुंक्ते तस्माद्यज्ञोऽन्यत्र पदद्वयं यथेष्टं प्रयोक्तव्यमिति दिक् ७३ परस्मै
इति परतः तत्रादिविभक्त्यर्थे इति पंच— म्य तात् परादन्य इत्युक्तेऽपि मात्रालाघवं नास्ति परत्वस्य सावधित्वात् अवध्यपेक्षायामनुदा
त्तङितइत्यादयः संबध्यन्ते अन्यत्वस्यापि सापेक्षत्वात् आदुभे चेति संबध्यते अनुदात्तेतो ङितो निविशादेः ञितः स्वरितेतश्च धातोः पर

॥ परतोऽन्यत् ॥ ७४ ॥

तोऽन्यस्माद्धातोः केवलादतः आत्याभ्यां चकेवलं पंभवतीत्यर्थः भवति अति अनुदात्तेत इत्यादि किं स्पर्द्धते च्यवते अत्राऽनुदात्तेतः
ञित्स्वरितेतश्चेत्यनुवर्त्यैवाक्यभेदेन तेभ्योऽपि पंविधेयं क्वचित् अनुक्तमप्यूहति पंडितो जनः अनुकरोति पराकरोति अभिक्षिपति परि
मृष्यति प्रवहतीत्यादि सिद्धं अत्रेदमवधेयं आङ्गु विकर्मणीत्यस्ति तस्याऽग्रेकर्त्तरि यमिति सूत्रणीयं तस्याऽग्रेऽनुदात्तङित इति निविशा
देरिति स्वरितेत इति सूत्रणीयं पंमिति च न चाऽनुदात्तङित इत्यत्र पंमित्येवानुवर्तत इति वाच्यं तस्य पूर्वेणाप्राप्तस्य पस्याऽपवादत्वात् स्वरिते
त्सत्रं तु आत्येऽनुवर्तते न च पंमात्रमेवानुवर्तते इति वाच्यं सूत्रारंभस्य वैयर्थ्यप्रसंगात् कर्त्रीत्यनेन तस्य सिद्धत्वात् न चाऽऽदित्येवानुवर्तेत
सूत्रारंभस्य वैयर्थ्यप्रसंगात् स्वरितञितामपि अनुदात्तेत्त्वस्य सुपठत्वात् पंमित्यनेन नहतीत्यादि सिद्धं एवं च कारग्रहणमाङ्ग्रहणमु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेग्रहणंनकर्तव्यंभवतीतिकृतोनकृतमितिचिंत्यमितिदिक् ७४ पइतयस्यसपित्ता आदिर्यस्यसत्तादिः पिच्चतादिश्च पितादीनाम्या
मन्योऽपितादिः नञोतिसमासः ङितोङ इत्यर्थः अङितङिदित्याहाङिद्वरिति गम्यते अत्र सरतेस्त्रहसदन इत्याहत्रसदेन्नचरिति गम्यते
यथा अत्रपर्युदासबलात्पितादिभिन्नः प्रत्ययएवगृह्यतेनधातुः तेनदरिद्राप्रतिप्रतपभिन्नस्यधातोर्ङित्वंनसतिङित्ये आत्स्यात् यद्वा
एधशीङादेरनुदात्तेत्वङित्वकरणान्नधातोर्ग्रहः अन्यथाऽस्मादेवङित्वादात्मनेपदसिद्धेः किंङित्वादिनानतुङिदितिमार्त्तिकदितिपाठ्यं
तत्सूत्रेणनकर्तव्यमितिलाघवंगुणादिनिषेधस्तूभयत्रतुल्य इतिचेन्नस्वपितः वक्त इत्यत्रयजादित्वात्किति संप्रसारणप्रसंगात् कुरुत इत्य
त्राङित्वात् इरित्यस्याप्रसंगात् अन्यथाचकात्तुरित्यादावतिप्रसंगात् कुरुतइत्यत्रैवोभयव्यवधानसत्वात् नन्व त्रादिग्रहणंव्यर्थंअपि

॥ अपितादिर्ङित् ॥ ७५॥

नादिर्ङिदित्येवयुक्तं सिसत्तासीत्यत्रैवनवानांग्रहणंभविष्यतिनचसिस्योर्ग्रहणार्थं तदितिवाच्यं सिस्योरितिलिंगात्तयोर्ङित्वाभावात् एवं
तर्हीत्तरार्थंतत् अपिदित्यः यपर्युदासोनञ्नओक्तमनित्यमितिस्वीकारात् सचाऽनित्यः ततश्चकुटादेः कुङेत्यात्परः ञितणिङिन्नः प्रत्ययो
ङित्तविज्ञेः परइडादिः प्रत्ययोङिद्भवतिकर्णोः परङ्डादिर्वाउहि जिताकुटिष्यति औणिवीत् औणुवीदित्यादिसिद्धं ननुतआदिर्यस्येतिकु
तानविग्रहः भेदव्याख्यानाऽनुसारात् लक्ष्यानुसाराद्याकरणांतराऽनुसरणाच्च किंचतच्छब्देनविग्रहेतिपृतयोरनुवाददोषः स्यात्सिले
नसिद्धत्वात् तोशब्देनविग्रहेतुनायंदोषः अयंसादेः कृताचाऽनेनङित्वंकुत्तोनेतिचेत्तमेवयङ्नङोर्ङित्करणात् ज्ञापकात् नानिटि
सेइतिसूत्राऽरंभाच्च अतः परिशेषात्तिवादीनांचतुर्विधानामाख्यातानांतद्धिकरणानां चानेनङित्वंनान्येषांतेनविभराचकारेत्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दावामोनयतु माधवः अपित्तादिरितितदन्यार्थे नञा समासः अत एव च प्रसज्यप्रतिषेधान्नञो यथेष्टं संबंध इत्याह तन्न परस्परविरो
धात् यद्यन्यार्थे नञ् तदुत्तरपदेन संबंधो न क्रियया यदि प्रसज्यप्रतिषेधे नञ् तर्हि क्रियया संबंधो नोत्तरपदेन पद्यापि ङित्वं न भवति पि
च्च ङिन्न भवतीत्यर्थात् क्रूतां ङ्वानित्यत्र ताताङि स्थानिवद्भावप्राप्तपित्त्वनिषेधात् पिदाश्रयोऽवादावितीपु भवतीत्याह तदपि न तातङः ङि
त्त्वस्य तद्धावद्भावे नञ्समज्ञापको सिद्धं न सर्वत्रेत्यनित्यत्वादन्नानङ्गीकारात् किं च तातङो ङित्वस्याऽनन्यार्थस्य सत्वेन तद्विरुद्धस्य पित्त्वस्याऽप्र
वृत्तेः अतिदेशो हि उपदेशविरुद्धं स्वकार्यं न प्रवर्तयति यथा क्षत्रिये ब्राह्मणकार्यातिदेशः क्षत्रियकार्यं न निवर्तयति किं च तातङो ङित्वे
तु व्यर्थमेव हो त्वेनन्नाऽतिदेशेन सिद्धं तत्कथं तत्र पित्कार्यप्रवृत्तिः संहतेति दिक् ७५ णोआदिर्यस्याऽष्टादशात्मकस्य समुदायस्य सणा

॥ णादिः कित् ॥ ७६ ॥

दिः कित् किद्वत् पूर्ववदतिदेशोऽयं पूर्वसूत्रादादिग्रहणमनुवर्त्य वाक्यभेदेन व्याख्येयं णाद्यादिः किदिति तेन पादादेरपि कित्त्वसिद्धं न
च सीष्टादावतिप्रसंगः शेकुः सिस्योरिति ज्ञापकात् ननु किद्ग्रहणं किमर्थं पूर्वसूत्रान्ङितइत्यनुवृत्तिसत्वात् मैवं ईजतुरित्यादौ संप्रसारणा
ऽभावप्रसंगात् चक्रतुरित्यादौ ङित्यइरित्युत्वापत्तेश्च अथ णादिग्रहणे नञ्वत्वादेर्णइत्यादयः कुतो न गृह्यते मैवं क्ङितोः कित्वे व पर्य्यप्र
संगात् बभूविथ बभूवेत्यत्रापित्वात् कित्वाऽभावेऽपि न क्षतिः प्रतिपदोक्तेन वुकागुणवृद्ध्योर्बाधसंभवात् ननु ऋदुपधानां कित्वा सत्वाद्गु
णः स्यात् मैवं प्रत्ययमात्रापेक्षत्वेन कित्वस्यांतरंगत्वात् धातुलघुनाप्युपधासापेक्षत्वेन गुणस्य बहिरंगत्वात् प्रायशो दृश्यतामिहेति कि
त्वेन गुणस्य बाधसंभवाच्च ईजतुः जुहूवतुः णादिः कित्स्व्यात् अपित्किंइत्यपहाय पादादेरिज्यात् अत्र केचित् णादिरितियोगं विभज्यादि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दं चप्रकारार्थमाश्रित्य ङिदितिचाऽनुवर्त्याऽन्येषामपिप्रत्ययानां ङित्त्वविधायकमिदितेत्यादि सिद्धमित्याहुः ७६ ऋतश्चसंयोगस्य ऋतः सं
योगे तस्माण्णादिः किन्नजज्ञरतुः शश्रतुः ममस्रतुः वव्रश्चतुः णादिः किमथ्यात् श्रीयते ऋतसंयोगात् किं ऊवतुः ऊयतुः केचित्तु ऋ इति
प्रश्लिष्यंते ऋ ऋतुरितिस्थिते अकित्वाद्गुणे कृतेहिल्वेच आरतुरित्यादिसिद्धमित्याहुः अन्यत्वर्तिने प्रश्लेषः ऋ ऋतुरितिस्थितेद्वित्वे
रइत्यत्वेऋ अरित्यसिच कृतेतस्य पूर्वग्रहणेनग्रहणाद्राम्वोरित्याकारे सिद्धयारतुरित्याहुः अत्राद्ग्रहणमनुवर्त्यतेत्रेणद्वितीयोऽपिवा
क्यार्थः कर्तव्यः ऋदंतात्संयोगादेर्ण्यादिर्नेकित् तस्स्मरतुः जहूरतुरित्यादिसिद्धं नञोक्तमनित्यमिति शश्रतुः ददृतुरित्यपि अत्र ऋहसादिति
सूत्रयितुमुचितंतत्र ऋश्चहसौच ऋहसंतस्मात् एवंसंयोगात्तस्य लोपइत्यत्रापि हसांतस्यलोपइति सूत्रयितुमुचितं हसावंते यस्येतिवि

॥ऋतसंयोगान्न॥ ७७॥ नक्त्वासेट्॥ ७८॥ अतिशायेहसादेर्येङ्डिश्च॥ ७९॥

ग्रहः ७७ सेट्क्त्वाकिन्नकित्कार्यंनकरोतीत्यर्थः देवित्वाय वित्वान्क्ता किं ईजिवृऊचिमसेट् किं मुक्त्वागत्वानेत्यनुवर्त्य वाक्यभेदेनव्याख्ये
यसेट्क्त्वाकिन्न क्वचित्भवतीत्यर्थः द्युतित्वाद्योतित्वा रुचित्वारोचित्वा वचित्वावञ्चित्वा लुचित्वालुञ्चित्वा इत्यादिसिद्धंक्तोवाक्त इतिक्तवत्वे
कदेशस्याऽप्युपलक्षणं गृह्यते इत्यनेन सोऽपिगृह्यते नच अर्थवद्ग्रहणे ननानर्थकस्येतिक्तवतोग्रहणं नेतिवाच्यं तस्याअनित्यत्वस्यवक्ष्य
आचेदितत्वात् अत्रक्त ग्रहणेन कितस्तशब्दस्य ग्रहणं विवक्षितं तेनतगोपिगृह्यते सेट्क्तोवाकिन्नभवति विकल्पश्चायं व्यवस्थितः तेनशीङ्स्वि
दिक्ष्विदिमिदिधृषमृषिभ्यो नित्यमकित् अन्येभ्योवा शयितः शयितवान् स्विदितः स्विदितवान् क्ष्वेदितः क्ष्वेदितवान् धर्षितः धर्षितवान् मर्षि
तः मर्षितवान् रुचितः रोचितः द्युतितं द्योतितमित्यादि क्तः किं रुरुचिषेसेट् किंगते ७८॥ ७ ॥ अतिशयनमतिशयः अतिपूर्वात् शीङोभावे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चं आ
ल आ
२६

स्वरादइतिश्चः यद्यपिकर्तृकर्माद्यर्थोप्यतिशयशब्दोऽस्तितथापिसनेहगृह्यतेकर्तृकर्मणोराख्यातेनैवोक्तत्वात्करणादेरप्रतीतेश्च अतिश
योद्विविधः पौनःपुन्यभृशार्थश्च आद्योयथाकस्यचिद्धरुपेणताडनेदंडेचजातेलोकाआहदंडदंडातिशयोजातइतितत्रपौनःपुन्यंगम्यतेद्वि
तीयोयथापूर्वेन् महाभागतयाऽतिशेषेइत्यत्र भक्तयापूर्वातिक्रमणेनाभभक्तेः भूयोभावः भक्त्याभूयोभवसीतिगम्यतेसचाऽतिशयः
प्रकृत्यर्थविशेषणम् अतिशयविशिष्टक्रियावचनादिति एवंचातिशयोयङोद्योत्योऽर्थः शुक्लतरइत्यादौप्रकर्षस्तरवाद्यर्थइतिमिश्राः
एकेतुअतिशयोयङोवाच्योऽर्थः सस्वच्छायया ऽणादेरपत्याद्यर्थोयथासचव्यापारस्यविशेषणम्विशेष्योवाक्रियाप्राधान्यस्यधात्वर्थ
प्रधानस्यव्यानिर्वाहात् यङन्तस्यापिधातुत्वात् हसआदिर्यस्यसहसादिस्तस्माद्धातोर्यङ्ल्यकोवावाक्यार्थः द्विरित्यऽपरंवाक्यंतत्रधातोरि
त्यनुवर्ततेसनयङः प्रकृतिभूतोग्राह्यः अटाट्यतेइत्याद्यऽसिद्धिप्रसंगात् किंतुयङन्तोधातुर्गृह्यते तत्रहसादेराद्यस्यैकस्वरस्यद्विर्वचनस्व
रादेस्तुद्वितीयस्यचेतितन्तीयंवाक्यं अतिशयेहसादेर्यङ् द्विर्वचनसूचिसूत्रिमूत्रिभ्योऽनेनयङ् किमर्थमिदंपूर्वेणैवसिद्धत्वादितिचेत् स
त्यैनियमार्थमिदं अनेकस्वरेभ्योयदिभवतितर्ह्येभ्यएवनैतेनजागर्तिदरिद्रातिचिकीर्षतीत्यादिभ्योनतंत्रादिनापूर्ववाक्याभ्यामपिचशब्दः
संबध्यते अतिशयेचेतिचशब्दस्याऽयंस्वभावोयस्याऽप्युच्यतेताहृशंद्वितीयमुक्तमनुक्तंवासमुच्चिनोति अत्रत्वनुक्तसमुच्चयः गत्यऽर्थेभ्यः
कौटिल्यएवलुपसदचरजपजभदहदशगृभ्योधात्वर्थगर्हायामेवनातिशयेहसादिश्चेत्यत्राऽनुक्तधातवन्तरंसमुच्चिनोति अस्यार्थस्तृणुभ्यो
यङितिनेधत्यादिभ्यः कात्यायनसंवादात् पापठ्यतेवेदंचैत्रः वेदाक्षरग्रहणाऽनुकूलः एकचैत्राभिन्नाश्रयकोवर्तमानोऽतिशयविशि
ष्टोव्यापारः व्यापारातिशयोवेतिवोधः ब्रह्मजाज्ञायतेसुधीः ब्रह्माश्रयाऽज्ञाननिवृत्त्यनुकूलएकसुबुद्ध्यभिन्नाश्रयकोवर्तमानोऽतिशयवि
शिष्टोव्यापारः व्यापारातिशयोवेतिवोधः अटाट्यतेवालः वालाभिन्नाश्रयकोवक्रगत्यनुकूलोवर्तमानोव्यापारः क्रयेतिस्थिते नञोक्त

२६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनित्यमिति निषेधाभावाद्गुणो ऊर्णोतेर्यङ् शब्दस्य द्वित्वे हसादिशेषे आतइ निर्देशे आर्यते अटाट्यते अशाश्यते ऊर्णोनूयते फं त्यन्ताण्णत्वस्यासिद्ध
त्वान्नशब्दस्य द्वित्वे यङीति गुणः ऊर्णोनूयते सोसूच्यते सोसूत्र्यते मोमूत्र्यते अतिशये किं पठति हसादेः किं भृशमीक्षते धातोः किं प्रपठति
भृशं उपसर्गविशिष्टान्माभूत् उपसर्गस्य द्वित्वादोस्यान्तं धातोरेकाचो हलादेः क्रियासमभिहारे यङ् त्वत्र एकाच् ग्रहणं सुत्याज्यं सूच्यादिग्र
हणस्य नियमार्थत्वसंभवात् अथ हलादेरित्यपि त्याज्यमत्वादिग्रहणस्य नियमार्थत्वात् क्रियासमभिहारे इत्यस्य स्थानेऽतिशये इति पाठ्य
लाघवात् एकार्थीभावेऽन्वये तु वृत्तिर्व्यपेक्षायां तु वाक्यमिति व्यवस्था अत्र मिश्राः अथ कथं यङन्तादात्मनेपदं भवति कथं च न स्यात् ङि।
तो धातोरात्मनेपदमुच्यते यश्चाऽत्र धातुः न स ङित् न चाऽयं समुदायस्यानुबन्धः यश्च ङित् प्रत्ययो नासौ धातुः यत्र चावयवे कृतं लिंगम्।
चरितार्थं तत्र समुदायस्य विशेषकं भवति अयं ङकारस्तु वेभिद्यत इत्यादौ गुणनिषेधादौ चरितार्थः कश्चिदाह क्रियासमभिहारेऽयङ् त्यक
ङोऽत्र श्लिष्यते स चानुदात्तोऽनुनासिक इति ज्ञायते तत्रानुदात्तत्वमवयवेऽचरितार्थं समुदायस्य विशेषकं भवति अनुदात्तेतश्च हला
देरिति युच् न भवति चंक्रम्यतेत्यत्र चंक्रम्यद्रव्यग्रहणाल्लिंगादिति स वक्तव्यः अथ कथं ऋतेरीयङ् तदात्मनेपदं भवति सोपि ङित्का
रो गुणनिवृत्तौ चरितार्थ इति स चेत् ब्रूयात् तस्याप्यादित इकार ईकारो वाऽनुदात्तः प्रश्लिष्यत इति प्रतिब्रूयादिति चेत् न इकारे नुम्प्रसज्येत
ईकारे श्वीदितो निष्ठायामिती इणनिषेधः स्यादिति निषेधदोषनुम्विधौ गौः पादान्ते इति अतोऽन्तग्रहणमनुवर्तते नान्त इकार इत्संज्ञकार्यं प्राप्तं वा
नुम् श्वीदितो निष्ठायामित्यत्राप्येकाच इति अनुवर्तते सत्यम् प्रतिविदितमायुष्मतां मुधा पुनरयं प्रयासः तथा हि अनुदात्त इत्यत्र न धातुग्रहणं।
मस्तितत्तः किं इदं ततो भवति प्रत्यये मेवङित्तमाश्रित्यात्मनेपदं सिद्धं भवति न चैवमशिश्रियदवोचदित्यादौ चङ्ङ्भ्यामपि प्रसंगः प्रागेव वि
करणेभ्योऽनुदात्तङित इत्येतत्प्रकरणं प्रवर्ततेऽन्यथा वर्तते इत्यादौ विकरणव्यवधानान्नियमो न स्यात् यथा च प्रागेव विकरणेभ्य अनुदात्तनि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यमः प्रवर्तते ऽ त्रन्ते तु नियमेभ्यो विकरण इति तथा तत्रैव प्रतिपादितमित्यलमियते त्याहुः अत्रोच्यते ङि॰ तो धातोरित्युक्तं तत्र प्रष्टव्यं किमत्र ङा
त्ति धातुत्वं ङि॰ त्वं वा नाद्यः सनाद्यन्ता धातव इति धातुत्वसंभवात् ङि॰ त्वस्य श्रूयमाणत्वाच्च यच्च नायं समुदायस्येति तन्न उभयानुबंधसंभवात् यथा
सुपः पारो ऽ सुपीति निर्देशादवयवानुबंधः सुप्तिङ॰ तमिति समुदायानुबंधः तथा ङि॰ त्वस्या ऽ प्यः वयवानुबंधत्वाद्गुणनिषेधादिकार्यं समुदा
यानुबंधत्वादात्मनेपदं च सेतत्स्यति यत्वयंङ॰ कारस्त्वितित न्न मित्वेनापि तत्सिद्धेः ङितीत्यत्र गकारप्रश्लेषात् न च ग्रहादेः संप्रसारणार्थं ङि॰ त्वंसा
त् तत्रापि गकारप्रश्लेषात् येरा ऽ नुनासिक इति ङ॰ कारे कृते मात्यरत्वेन हलोयमामितिलोपात् यद्वा मगयोः संयोगसंज्ञामाश्रित्य संयो
गांतलोपसंभवात् अंतवर्तिन्या विभक्त्या पदत्वसत्वात्संयोगांतस्य पदस्य लोपइत्यर्थसंभवाच्च सन्यङोरित्यत्र सन्यगोरिति सुवचत्वादित्यप्र
योजनान्तराभावात् ङि॰ त्वमात्मनेपदार्थमेव यथा कङ् णिङो ङि॰ त्वं न च नः क्यणोरनिटीत्यत्र ह्य ऽनुबंधकत्वेन सामान्यग्रहणार्थं तदिति वा
च्यं अनुबन्धांतरेणा ऽ पि तत्सिद्धेः इत्थमयङीत्यना कारप्रश्लेषेणा ऽ नुदात्तत्वसंपादनं व्यर्थमेव यदपि क्ऋतेरीयङ॰ त्यादि तदपि न ङि॰ त्व
स्यात्मनेपदार्थत्वान्न च गुणनिषेधार्थं तत्त् कित्वेन गित्वेन वा तत्संभवात् इत्थमिकारप्रश्लेषोपि व्यर्थः यदपि अनुदात्तङि॰ दित्यादित्राप्यु
च्यते प्रत्ययंङि॰ तमाश्रित्यात्मनेपदं प्रत्ययाद्भवति समुदायाद्वा नाद्यः तस्यैवांतरंगत्वेन वा तत्संभवात् इत्थमिकारप्रश्लेषो पि व्यर्थः यदपि
अनुदात्तङि॰ दित्यादित्राप्युच्यते प्रत्ययंङि॰ तमाश्रित्यात्मनेपदं प्रत्ययाद्भवति समुदायाद्वा नाद्यः तस्यैवांतरंगत्वेन प्रत्ययात् पूर्वमद् प्र
संगात् यङ॰ एव हित्वप्रसंगाच्च सन्यङोरिति षष्ठ्या श्रयणात् नांत्यः समुदायस्य ङि॰ त्वा ऽ भावस्यात्वयैवोक्तत्वात् यदपि धातोरिति नास्ति तद
पि न क्षुवादयइति तस्या ऽनुवृत्तेः सत्वात् आङुण इत्यत्राचीत्यस्य यथा अनुवृत्ताववधितेन धातोराक्षेपसंभवात् इकोझलित्यत्र सनाय यथा
यदपि अभिश्रियदित्याद्युक्तं तदपि न ङि॰ त्वभावित्वेन प्रथममेवात्मनेपदप्रवृत्तिसंभवात् शदेः शित इत्यत्र भाविनं शितमाश्रित्या ऽ त्मनेप



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दंयच्छेति प्रत्ययस्यैव ङित्वमाश्रित्याऽऽत्मनेपद विधाने यत्न इवाऽऽचरति सत्नेवाचरति क्ष्मल इवाचरतीत्यत्रापि स्यात् नडादेर्ङित्वात् मन्म
तेतु उपदेशे योङितत्तदंतात् धातोरिति व्याख्यानान्न दोषः धातोः क्विवंतत्वेन ङित्त्वाभावात् किं च कुटिषतीत्यत्र स्यात् कुटादित्वे नस
नो ङित्वात् मन्मतेसन औपदेशिकङित्वेनास्तीति हि कगत्यर्थानां कौटिल्ये यङ् उक्तं तत्कौटिल्यं फलस्य व्यापारस्य वा विशेषणं एवं लुपा
दीनां गर्हायामपि ज्ञेयं गम्यतेऽश्वो मार्गं अश्वाभिन्नाश्रयकः मार्गभिन्नाश्रितवक्रगत्यनुकूलो वर्तमानो व्यापारः मार्गाभिन्नाश्रयसंयोगानु
कूलो वक्रो व्यापार इति वा लोलुप्यते वनं चैत्रः चैत्राऽभिन्नाश्रयको वनभिन्नाश्रयिततत्कुत्सितच्छेदनानुकूलो वर्तमानो व्यापारः वनाभिन्नाश्र
यछेदनानुकूलः कुत्सितो व्यापार इति लुपादिषु योगत्यर्थस्तस्माद्गर्हायामेव यङ् कौटिल्यस्यावकाशः जंघन्यते गर्हायामित्यस्यावकाशः सास

॥ इच्छायामात्मनः सः ॥ ८० ॥

घ्नते वृक्षः कुत्सितसाऽवयवविभागानुकूल एकवृक्षाभिन्नाश्रयको वर्तमानो व्यापारः सास्द्यते मार्गं चैत्र इत्यत्रोभयप्रसंगे परत्वाद्गर्हायां
यङ् एवमन्यदपि बोध्यं ७९ इष्टिरिच्छा इहैव सूत्रे इति यातनाङ्गावेद् परः छन्धातोरेशः इति कर्मार्थे वा चकाद्धातोरिच्छायां सप्रत्ययः तच्चेदिच्छ
माणमिच्छाकर्तुरात्मसंबंध्येव भवति हि रित्यनुवर्तते भिन्नवाक्यं धातोरित्यनुवर्तते धातुश्चनसप्रकृतिर्गृह्यते किं तु सांतः प्रसेत्तुमिच्छति प्रती
षिषति इणः सः सधातुरिति धातुसंज्ञा स्वयादेः प्ररङ्तिसस्य हिलयः सेङिति पूर्वस्येत्वं न तु इषि कर्मार्थेति कस्माल्लभ्य शृणु इच्छायाः कर्मनियतत्वा
दिषि कर्मेति लब्धं धातोः प्रत्ययविधानात्तदर्थत्वं चलनं पक्तुमिच्छति पिपक्षति तुमन्तु स्वार्थिकः साध्यावस्थाक्रियामाह स च लौकिके वाक्ये प्र
युज्यते केवलस्य धातोः प्रयोगानर्हत्वात् अलौकिके तु धातुमात्रं प्रयुज्यते तत्तत्तुमः कथं लोप इति नाशंक्यं पचनेनेच्छतीत्यत्राऽपि साऽस्तु क

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च॰ श्रा॰
ल॰ भा॰
२८

रणस्याऽपिक्रियायामपेक्षणादितिचेन्नवैषम्यात् कर्म्महिप्रथममपेक्षणादंतरंगमव्यभिचाराच्चकरणंतुविपरीतं अंतरंगेरेवविधेराकांक्षापू
र्त्तौवहिरंगेप्रवृत्तिरयुक्ता किंचाऽनभिधानादपिनपिपक्षतीत्युक्तेपचेरिच्छाकर्मनैवप्रतीयतेनकरणतायथाराजपुत्रइत्युक्तेराजन्यएवपुत्रः
प्रतीयतेनतत्समीपवर्त्त्यन्यदीयः केचित्वाहुर्विकर्मणीत्यतः कर्मणीत्यनुवर्त्त्यपंचम्याविपरिणम्यकर्मणोधातोरित्याहुः यत्तुयेनहेतुनापचने
नेच्छतीतिवाक्यंभवतितेनैवहेतुनावृत्तिः प्राप्नोतीत्युक्तंतन्नऋद्धस्यराज्ञः पुरुषइतिवाक्यवत् वृत्तेरप्राप्तेः धात्वर्थस्यकर्मत्वंतुफलावच्छि
न्नस्यव्यापारस्यहितस्यफलस्यवा आत्मशब्दस्तुनचेतनद्रव्यवाचीतथासतिआत्मनइतीच्छाशब्दयोगेकर्त्तरिषष्ठीस्यात् ततश्चात्मकर्तृ
कायामिच्छायामित्यर्थः स्याततथाचात्मग्रहणंव्यर्थंस्यात् इच्छाया आत्मकर्तृकत्वाऽभिचारात् व्यर्थविशेषणतापत्तेः कर्मणिषष्ठीइतिप
क्षेतु असंभवः स्यात् नस्वात्मनोद्रव्यस्यासाध्यत्वाद्धात्वर्थत्वंकुत्रापिसंभवतिक्रियायाएवतत्संभवात् अतः परव्यावृत्त्यर्थः स्वशब्दस्यपर्याऽ
यमात्मशब्दः संबंधसामान्येचषष्ठी आत्मनः स्वस्येत्यर्थः स्वशब्देनात्रैषिकर्त्तैवगृह्यतेइच्छायाः क्रियारूपत्वेनकर्त्तारंविनाऽनुपपन्नत्वात्
कर्त्तुराक्षेपात् इच्छाकर्त्तव्यमाणवस्तुयदिस्वसंबंधित्वेनैवेच्छतितदाधातोः सप्रत्ययइत्यर्थः शिष्याणांपठनमिच्छतिगुरुरित्यादौसोनशि
ष्याणांस्वसंबंधित्वेपिपठनस्यसाक्षात्स्वसंबंधित्वाभावात् इच्छायांकिंभोक्तुंजानातिधातोः किंप्रतिष्ठासते अत्रहिप्रशब्दसमभिहारेगतिः प्र
तीयतेगतिश्चधातोरेवार्थेयद्यपिप्रशब्दंविनागतेरप्रतीतेर्द्योतकत्वेनाऽस्यापेक्षत्वात् विशिष्टस्यकर्मत्वाद्धिशिष्टात्प्रत्ययोपपत्तिः स्याततथाचा
ऽहृद्धित्वयोर्दोषः स्यात्तन्निवृत्त्यर्थंधातुग्रहणंधातोः कर्मणः समानकर्तृकादिच्छायांवेतिसूत्रेकर्मणइतिव्यर्थंउक्तरीत्यातल्लाभसंभवात्स
मानकर्तृकादित्यपिव्यर्थं आत्मनइत्यनेनैवतल्लाभात् उत्तरसूत्रेचतन्नपाठ्यमितिलाघवाच्चवेत्यपिव्यर्थंएकार्थीभावेवृत्ति व्यपेक्षायांतु
वाक्यमितितत्फलस्यसिद्धत्वात् अथपूर्वसूत्रात्त्रोऽनुवर्त्ततेसइच्छायामित्यस्याऽग्रेयोज्यः अनुक्तसमुच्चयार्थस्तेनाऽशंकायामपिसप्र



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्ययः नदीवृक्षमुन्मुमूलयिषति वृष्टिराजिगमिषति अन्येतु चेतनत्वारोपात् पाषाणादीनां संबोधनं वदिष्याइः तन्मते चकारो भिन्नवाक्यं नत्वे
त्यतो नेति इच्छायां सइति चा ऽनुवर्तते प्रत्ययग्रहणपरिभाषया सशब्देन सांतं गृह्यते तेन इच्छा सांतान्नेत्यर्थः चिकीर्षितुमिच्छति स्वार्थस
तान्न इच्छायां सो भवत्येव जुगुप्सिषति मीमांसिषते इति अनणादि किंद्वितः कि दिति चा ऽनुवर्त्यं वाक्यभेदं नव्याख्येयं सः किद्वत्तिन च भवति
लक्ष्यानुसाराच्च व्यवस्था तेन रुरुदिषति विविदिषति मुमुषिषति जिघृक्षति सुषुप्सति पिप्रच्छिषति तद्धितं क्षनीत्यादौ गुणाः भावसंप्रसारणन
लोपाः सिध्यंतीति दिक् ८० बहुवचनमाद्यर्थे गुप् तिज् कित् मान् वध् दान् शान् भ्यः सप्रत्ययः धातोरष्टहिः इच्छायां पूर्वेण सिद्धत्वादर्थांतरान
भिधानाच्च स्वार्थे विधिरयं गुप् तिज् मान वधा भ्य अनुदात्तेतः दानशानौ स्वरितेतौ अवयवे ऽचरितार्थं लिंगं समुदायात्तेन प्रवर्तकं जुगुप्सते आ

॥गुप्व्यः॥८१॥ आयः॥८२॥ नाम्नोयः॥८३॥

गमजगमनित्यमिति नेट् नानिर्दिष्टे इति न गुणः तितिक्षते चिकित्सति मीमांसते बीभत्सते दीदांसति शीशांसति ८१ गुप्व्य इत्यनुवर्तते शब्दा
धिकारश्चायं तेन गुपू धूप विच्छि पणि पनिभ्य आयः अनिर्दिष्टार्थत्वात्स्वार्थे पणि पन्योरनुदात्तेत्वं आयाऽभावे चरितार्थमित्यायांतान्ना ऽऽत्म
वर्तते इति आभ्यां चा ऽयः स्तुतावेवेष्यते गोपायति धूपायति विच्छायति पणायति पनायति अत्रा ऽनुक्तसमुच्चयार्थश्चानुवर्तते तेन ऋतेरीयङ् क
तीयते कमेर्णिङ् कामयते वा ऽनध्यायादि गोपायांचकार जुगोप ऋतीयांचक्रे आनर्ते कामयांचक्रे चकमे इति सिद्धं ८२ इषिकर्मार्थ का
न्नाम्न इच्छायामयं प्रत्ययः तद्दिष्यमाणं यदीच्छाकर्तुः स्वस्य संबंधि भवति पुत्रीयति घटीयति न तु कर्मेति कस्मान्न लब्धमिति चेत् शृणु इच्छा
याः सकर्मकत्वेना ऽऽक्षिप्तस्य कर्मणो नामार्थेना ऽभेदसंबंधा ल्लब्धं न तु पुत्रेण पुत्राय पुत्राद्वेच्छतीत्यादावपि कुतो न तेषामपीच्छायामन्वय

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यसंभवादिति चेन्न वहिरंगत्वात्कर्मे हि प्रथमाकांक्षितत्वादंतरंगमव्यभिचारि च करणादि तु पश्चादपेक्षितत्वाद्बहिरंगं व्यभिचारि च न हि स
र्वत्रेच्छायां करणादिरस्ती नियमोऽस्ति अंतरंगे कर्मणि चरितार्थे वहिरंगे करणादौ प्रवर्तितुं नार्हतीति अप्रतीतेश्च न हि पुत्रीयतीत्युक्ते करणादिः
कश्चित्प्रत्येति यद्वा आङ्डुवीत्यतः कर्मणीत्यनुवर्त्य कर्मणि वर्तमानान्नाम्न इति व्याख्या नात्मन इत्यनुवर्तते स च चेतनद्रव्यवचनो नानग्रा
ह्यः घटीयतीत्यादावप्रसंगात् घटादेरचेतनत्वात् परव्यावृत्त्यर्थः स्वशब्दपर्यायो गृह्यते इच्छायाश्च क्रियात्वेन स्वाश्रयः कर्त्ताऽऽक्षिप्तः स चे
दिष्यमाणवस्तु स्वसंबंधित्वेनाऽपेक्षितेतराऽऽत्मनः स्वसंबंधित्वं च साक्षाद्ग्राह्यं यजमानस्य पुत्रमिच्छति पुरोधा इत्यत्र न यः यजमानपुत्र
स्य साक्षात्स्वसंबंधित्वाभावात् ननु स्वस्य पुत्रं परस्य दासमिच्छतीत्यत्र कुतो पुत्रस्य स्वसंबंधित्वादिति चेन्न इष्यमाणेन रूपेण स्वसंबंधित्व
स्य विवक्षणात् तच्चात्र दासत्वेन तत्स्वसंबंधि न तु नाम्न इति किमर्थं धातोः पूर्वेण सविधानात्पारिशेष्यान्नाम्नो लाभात् न च सिवंतादप्या
ऽयास्यतीति वाच्यं क्ष्यस्याऽभावात् न च वाच्यतिमृत्यपतीत्यादौ कृत्वजवादिप्रसंग इति वाच्यं अप्ययोरादिसत्रजवाऽकारेण न यपरकार्या
भावस्य ज्ञापितत्वात् राजीयतीत्यत्र तु ज्ञापकसिद्धं न सर्वत्रेति न लोपः सिध्यति नान्तोऽयः पक्षे तु कृत्वाद्यऽभावो युक्त एव न चाऽत्र पक्षे राजी
यतीत्यत्र नलोपाप्रसंगः ओर्वमो रित्यतो लोप इति कृ ज्ञो य इत्यतो ये इति क्त संयोगादित्यतो लेति चानुवर्त्य वाक्यभेदेन व्याख्ययनेति स्वरूप
परशब्दाधिकारात् षष्ठ्या विपरिणमयितव्यं तेन नाम्नो वस्य लोपो ये इति लाभात् इत्थं व्यर्थं नाम्न इति चेत् उच्यते एकत्वस्य विवक्षणार्थं
नामग्रहणं तेनाऽनेकस्यान्नाम्नः पदाहान्नयः महांतं पुत्रमिच्छति इति किंच महापुत्रीयतीति स्यात् तच्चेष्टमेव यद्ययं विग्रहः महानपु
त्रो महापुत्र इति महांतं पुत्रमिच्छतीति विग्रहे तु नेष्टं नन्वऽत्र कर्मत्वाभावादेव न भविष्यतीति मैवं कर्मत्वसत्वात् क्रियाजन्यफलाश्रयः क
र्म क्रिया चात्रेच्छा तज्जन्यफलमिष्टत्वं तच्च समुदायाश्रितं न हि पुत्रमात्रमिच्छति नापि महत्त्वमात्रं किंतु विशिष्टं एवं तर्हि स विशेषणानां



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृत्तिर्नवृत्तस्यविशेषणयोगोनेतिवचनात्तनसमुदायाद्यः इदंचन्यायसिद्धानुवादकंनत्वऽपूर्ववचनं तथाहिपुत्रस्यप्रत्ययार्थेनसहएका
र्थीभावरूपोऽन्वयोविशेषणेननतुव्यपेक्षारूपः नचैकस्यविरुद्धमन्वयद्वयंसंभवतिकव्ङस्यरात्तःपुरुषइत्यत्रराज्ञोयथा पुत्रीयतीत्यत्रतु
समुदायशक्तौप्रविष्टस्यविशेषणीभूतस्यपुत्रस्यनविशेषणाऽन्वयःसंभवतिपदार्थःपदार्थेनयुज्यतेनत्वेकदेशेनेतिसर्वतंत्रसम्मतत्वात्ना
मपक्षेकर्मत्वेसत्यपितद्वाचकविभक्त्यऽभावात्प्रत्ययोनभविष्यतीतिचेत् नत्रिकपक्षेतथात्वेपिपंचकेनामार्थइतिपक्षेनाम्नैवकर्मणो
ऽभिधानाद्विभक्त्यनपेक्षणात् ननुद्योतकत्वेनविभक्तिरपेक्षिताचेत् नयत्रानेककारकसंभवस्तत्रकारकविशेषद्योतनार्थविभक्तेरपेक्ष
णात् अत्रतुकर्मैवकारकं यथापिपक्षतिपचतीत्यत्रविक्लित्तिरेवकर्मपश्यमृगोधावतीत्यत्रमृग कर्तृकसरणदर्शनेकर्मनकारकांतरमस्ति

॥ ई॰चा॰स्य ॥ ८४ ॥

अतोविभक्त्याविनापिनिर्वाहः तथाऽत्रापिएवंतर्हिउत्तरार्थेनाम्नइतिइच्छायांकिंपुत्रंजानाति आत्मनःकिंशत्रोःपुत्रमिच्छतिकर्मणःकिं
पुत्रस्येच्छति ८३ यद्यप्यनुवर्ततेसप्तम्याविपरिणम्यते येपरेवर्णास्यईर्भवतिनेत्यनुवृत्त्याक्वचिन्नभवति पुत्रीयतिगांगोयति अशनमिच्छति अ
शनायति अशनीयतिधनायतिधनीयति उदकीयतिउदकपर्यायउदन्शब्दोप्यऽस्तितस्योदन्यति सुडाम्इत्यत्रसुडितियोगविभागा
त्क्वचिदन्यत्रापिसुट् अश्वस्यतिवडवाक्षीरस्यतिबालःवृषस्यतिगोःलवणस्यतुसुट्इतिसिद्धंडेःरक्इत्यत्रयोगविभागादऽन्यत्राप्यऽभ
वतीत्युक्तंक्वचिदकसुटोःसहप्रयोगोभवति यद्वाहशषान्तादित्यतःसकमनुवृत्यदिवादावट् इत्यतोऽटमनुवृत्यनाम्नःसकसकोऽटशब्दा
धिकारमाश्रित्यसगाऽऽगमोवाध्योव्याख्यानात् दध्यस्यति दधिस्यति मध्वस्यतिमधुस्यति षःसः इतिविपरीतनिर्देशान्नषः चोऽनुक्तस

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सं० आ० ल० भा० ३०

मुच्चयार्थः तेन मातान्यथाभ्यां येन किमिच्छति स्वरिच्छति क्वचित्काम्यप्रत्ययो भवति पुत्रकाम्यति स्वः काम्यति किं काम्यति एकार्थीभावरू
पेऽन्वयेवृत्तिर्व्यपेक्षायां तु वाक्यमिति व्यवस्थया रूपद्वयसिद्धौ पाणिनीयसूत्रेऽनुवृत्तेर्वाति व्यर्थ पश्य पुत्रमिच्छति घटमिति प्रत्युदाहरणेन तु द्वि
विधस्याप्यन्वयस्याऽभावद्योतनाय वस्तुतस्तु वाक्यमेव प्रत्युदाहरणमेकार्थीभावाभावात् यकाम्यान्तान्न कर्मणि प्रत्ययः कर्मणो धात्वर्थान्त
र्भावेनाऽकर्मकत्वात् ननु पुत्रीयति शिष्यमित्यादौ विवेच्छायेऽपि सकर्मकतानाकृतोनेति चेन्नइच्छायाअप्रतीतेः नहि शिष्यं पुत्रीयतीत्युक्ते
इच्छागम्यते किं त्वाचार एव ननु तात्पर्ये सति इच्छा सङ्गस्यते इति चेन्न तात्पर्यज्ञानस्य शाब्दबोधाऽहेतुत्वात् नहि वक्तृतात्पर्यं श्रोत्रावगन्तुं पाक
परतुहरमत्यक्षत्वात् अर्थप्रकरणादिना तात्पर्यज्ञानाङ्गीकरणं तु न युक्तं अर्थादिना शाब्दबोध एवाङ्गीकर्त्तुमुचितः किं तेन किं च सुमोन्मत्त

## ॥ आचारउपमानात् ॥ ८५ ॥

कादिवाक्ये व्यभिचाराच्च नहि वक्तृत्वं तत्र तात्पर्यमस्ति तत्रेश्वरतात्पर्यं ग्राह्यमिति चेन्न वक्तृतात्पर्यमित्यस्य वैयर्थ्यप्रसङ्गात् आवश्यकेन ते
नैव निर्वाहात् किं चेश्वरतात्पर्यमप्यज्ञातं हेतु ज्ञातं वा नाऽद्यः तस्य सर्वत्र साम्येन कुत्रास्ति नास्ति वेति ज्ञातुमशक्यत्वात् चैत्रस्य तु तात्पर्यज्ञा
ने सति मैत्रस्याऽपि बोधप्रसङ्गात् नान्त्यः अस्माकमीश्वरतात्पर्यज्ञानाऽसंभवात् कार्येण तदनुमास्यतीति चेत् न परस्पराश्रयप्रसङ्गात् शाब्द
बोधे सति तस्य कारणत्वग्रहः कारणत्वगृहीते च शाब्दबोध इति किं चेश्वरानङ्गीकर्तॄणां साङ्ख्यमीमांसकादीनां शाब्दबोधो न स्यात् तेषामीश्व
र एव नास्ति तात्पर्यज्ञानं तु दूरापास्तमिति दिक् ॥ ८४ ॥ आचरणं आचारः चरेर्भावे घञ् ज्ञानं व्यवहारो वा उपमीयतेऽनेनेत्युपमानमाङः साधनेत्र
र्कर्मणा उपमानादाचारे यस्तस्मिन्क्यचेपरे पूर्वस्यासस्यई इति वाक्यभेदेनैव द्वयोः समावेशसिद्धौ चोऽनुक्तसमुच्चयार्थः तेनाऽऽचारस्याप्युपमा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाद्यः पुत्रमिवाचरति पुत्रीयति शिष्यमुपाध्यायः हरीयति विप्रं राजा भानूयति चंद्रं विरहिणी प्रासादीयति कुट्यां भिक्षुः कुटीयति प्रासादे लुपः
गंगीयति पल्वले मूर्खः अत्र नाम्नः सिवंताद्यपः आद्ये लोप इत्याद्यः नुवृत्या न लोपः कार्यः अंत्ये यपयोरिति नाप कानदकार्याभावः साध्यः नाप
कसिद्धं न सर्वत्रेति नस्य लोपः राजानमिवाचरति राजीयति आकं भिक्षुः पुत्रविषयकं यद्‌ज्ञानं व्यवहारो वा तत्सदृशं शिष्याः भिन्नाश्रयं ज्ञानं
व्यवहारो वा तदनुकूलो वर्तमान एकगुर्वभिन्नाश्रयको व्यापारः प्रासादाभिन्नाश्रयकं यद्‌ज्ञानं व्यवहारो वा तत्सदृशं कुट्यभिन्नाश्रयं यद्‌ज्ञा
नं व्यवहारो वा तदनुकूलः एकभिक्ष्वाश्रयो वर्तमानो व्यापारः ८५ कर्तुरिति योगो विभज्यते कर्तुरुपमानान्नाम्न इति वर्तते चो ऽनुक्तसमुच्च
यार्थः तेनानुक्तः क्विप्प्रत्ययः समुच्चीयते नामत्वं सिवंतग्राह्यं न सिवंतविभक्तिकार्यप्रसंगात् कर्तुरुपमानान्नाम्न आचारेऽर्थे क्विप्प्रत्ययः

॥ कर्तुर्यङ् ॥ ८६ ॥

कृष्ण इवाचरति कृष्णति अत्रादिकृष्णां चकारयलइत्यः लोपः कृष्ण्यात् कवयति कवयति ऋ इवाचरति अति हिलं सवर्णो दीर्घः णत्वे ओ अ
नुः कर इवाचरति करति चकके वितु आ अत इति छित्वा आदंतादापिणोपीडावा ऽदेशउक्तः तन्मते चकीमाला इवाचरति मालाति सर्पः पथ इवाच
रति पथिनति अभात स्येतिदीर्घः नन्विनांशावित्यनेनोपधादीर्घमात्रस्य सोनियतत्वात् कथमत्र दीर्घः मैवं प्रवर्तमाने हि तत्र दीर्घे नियच्छतिपथ्या
दिषु त्वप्रवर्तमानं कथं दीर्घं नियच्छेत् केचित्त्वा ऽत्वाऽऽत्वाभ्यां वाधितत्वान्न प्रवर्तते यदित्वं त्वा ऽत्वेन विधीयेत तदा ऽपि प्रवर्तते तिया म्यता
मात्रेण नियमप्रवृत्तिमाहुस्तन्मते पथनति वृत्रहनतीत्यत्र तु नियमप्रवर्तनान्न दीर्घः राजानति रद्दामति कीमाति सजुषति आशिषतीत्यादौ नुपर
कार्येनाम्नो विधानात् कर्तुः किं पुत्रीयति शिष्यं कर्मोपमानमिदं उपमानात् किं पुत्रं आचरति कृष्णनिष्ठज्ञानव्यवहारसदृशः पुंड्रक निष्ठो वर्तमा
नो ज्ञानव्यवहारः मालानिष्ठवर्तमानव्यवहारसदृशः सर्पनिष्ठो वर्तमानो व्यवहारः उपमानस्य कर्तुः धात्वर्थातेमोवेः पि उपमेयेन कर्त्रा सकर्ती

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कत्वात् कर्तरि प्रत्ययः यथा पूर्वसूत्रे उपमानस्य कर्मणो धात्वर्थान्तरभावोऽपि उपमेयस्य कर्मणः सत्वात् कर्मणि अपि प्रत्ययाः द्वयोरपि आचार
क्रियापेक्षया कर्तृत्वकर्मत्वे बोध्ये अवगल्भक्लीबहोडिभ्यो क्विब्वक्तव्यः येभ्यो आदनुदात्तेत्यत्र आदित्ति योगविभागादात्मनेपदं बोध्यः णादीत्वेन
क्रियापेक्षया कर्तृत्वकर्मत्वे... कल्वादात्मनेपदम् अवगल्भाचक्रे क्विबन्तानां तु अवजगल्भे चिक्लिबे जुहोडे इति विशेषः ततः यङ् उपमानात् कर्तुर्नाम्न आचारेऽर्थे यङ् हंस इवा
चरति हंसायते गरुडायते हंसनिष्ठव्यवहारसदृशो वकनिष्ठो वर्तमानो व्यवहारः अत्र हस इति चानुवर्त्य वाक्यभेदेन व्याख्येयं हसस्य लोपो
यङि नस्य नित्यं लोपः सस्य व्यवस्थितः ओजसोऽप्सरसो नित्यमन्येषां तु विकल्पनात् अन्यहसस्य तु न लोपः राजायते वृत्रहायते पयायते
इडीयते अत्र न लोपे येइति दीर्घः तस्यानुपधादीर्घत्वेन नियमाभावात् अत्रोऽड्डुवीत्यतो भुवीत्यनुवर्त्य वाक्यभेदेन व्याख्येयं भवत्यर्थे ना
म्नो यङ् तस्मिंश्च नित्यं हसस्य लोपः योगविभागादिष्टसिद्धिरिति भवत्यर्थो च्व्यर्थविशिष्टो ग्राह्यः अशश्वत् शश्वद्भवति शश्वायते सुमनायते।
अत्र धातुसंज्ञाहेतौ प्रत्यये चिकीर्षिते उपसर्गसमानाकारपूर्वपदं पृथक्क्रियते चुरादिषु संग्रामङ् युद्ध इति विशिष्टपाठात् ज्ञापकात् अन्यथा ग्राम
युद्ध इत्येवापठिष्यत् अतो मनः शब्दात् पूर्वोऽदत्व समनायतेनात् स्वश्च कृतेति समासैकपद सुमनाप्यसुमिमनापिषते इति द्वित्वं च सिध्यति अत्र च
करोत्यर्थे करोत्यर्थश्च द्विधा उत्पादनरूपः एकः ततो द्वितीयोऽपरः करो
करोत् इत्युत्तरसूत्रादयङ्ग्य वाक्यभेदेन व्याख्येयं नाम्नो यङ् डीस्तः करोत्यर्थे करोत्यर्थश्च द्विधा उत्पादनरूपः एकः ततो द्वितीयोऽपरः करो
त्यर्थस्य सर्वधात्वर्थेष्वनुगतत्वात् सर्वधात्वर्थाः करोत्यर्थाः अपि भवति वरिवः शुश्रूषां करोति वरिवस्यति नमस्यति देवान् अत्र न चतुर्थीञ्ज
हत्स्वार्थायां वृत्तौ नमः शब्दस्यानर्थकत्वात् अजहत्स्वार्थायां तु प्रत्ययार्थे उपसर्जनत्वात् तपश्चरति तपस्यति शब्दं करोति शब्दायते वैरायते
कलहायते वाष्पमुद्वमति वाष्पायते ऊष्माणमुद्वमति ऊष्मायते कष्टाय क्रमते कष्टायते कक्षायते गहनायते इनिरुक्तिविषये पापार्थाः पापक
तुमुन्सहते इत्यर्थः सुखं वेदयते सुखायते दुःखायते सुखं दुःखं चानुभवतीत्यर्थः लक्ष्यानुसारादतिप्रसंगो नोद्भाव्यः ८६ ॥ ॥

आ
भा
३१

३१

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाम्नो ञिः प्रत्ययो भवति हिविधे करोत्यर्थे स च डित् यदि डित्संज्ञा विधीयते तर्हि डितिटेरित्यादावुस्यैव ग्रहणं स्यात् कृत्रिमत्वात् उ इत् यस्य
नाम्नोऽस्ति कृत्रिमत्वात् ततोऽतिदेशोऽयं परत्र प्रयुज्यमानः परशुर्ड्वाविनाऽपि वर्तिर्त्वन्यर्थेगमयति अडित्डि डित्याह डिह्दिति गम्यते
तस्य तु ग्रहणं न स्यात् कृत्रिमत्वादतोऽतिदेशोऽयं परत्र प्रयुज्यमानः परशुड्वाविनाऽपि वर्तितु न्यर्थं गमयति अडित्डि डित्याह डिहदिति गम्यते
यद्यऽपि डिदिति सामान्यशब्दस्तथापि लक्ष्यानुसाराद्व्याख्यानाद्विशेषपरो बोध्यः यद्वाऽडिदिति वचनसामर्थ्याद्विशेषपरः अन्यथा ञिडिङ्कर
णङ्गित्येवाऽवक्ष्यत् न चैवमुत्तरयोगयोरपि डिद्विधाने टिलोप इति वाच्यं धातोर्ञिः प्रेरणइति गौरवाभावात्सुपठितत्वात् न चैवं ञेरित्यादाव
स्यैव ग्रहणं स्यादेकानुबन्धकत्वादिति वाच्यं एकानुबन्धग्रहणेति परिभाषाया अनित्यत्वात् तत्र शसः शिल्वज्ञापकं शसीत्यस्य स्थाने असीति
पाठ्यतत्राऽनुबन्धकस्यैवाग्रहणं भविष्यति न जसादेः किं शित्वेन तज्ज्ञापयति तेन सुरारित्यत्र तत्र नो ग्रहणं भवति यथा तथा ञेरित्यादौ
ञिञिङ्ग्रहणं भविष्यति तेन डिद्धदित्यस्यैष्टवदित्यर्थः तेनेष्टयत्कार्यं दृष्टं संभावितं च तन्नाम्नो ञावतिदिश्यते टिलोपः इष्टे यथाऽयदिष्टः

॥ ञिर्डित्करणे ॥ ८७ ॥

एवं पटुमाचष्टे पटयति वृद्धो सत्यां पूर्वं वा टिलोपः अपीपटत् अपपटत्वाविन् मतुवतुलोपो यथा स्त्रग्विणमाचष्टे स्रजयति अग्निमंतमग्नयति
दृढवंतं दृढयति गुरुमाचष्टे गरयति युवानमल्पं वा यवयति कनयति अल्पयति अंतिकं वाढं वा नेदयति साधयति प्रियं स्थिरं स्फिरं माप
यति स्थापयति स्फापयति अत्र ञिर्डिदिति योगं विभज्य सापेक्षादपि नाम्नो ञिर्विधेयः माणवकं मुंडं करोति मुंडयति गुडं मिश्रं करोति मिश्रयति
काष्ठं श्लक्ष्णं करोति श्लक्ष्णयति पयो भोक्तुं व्रतं करोति व्रतयति शूद्राऽन्नभोक्तुं व्रतयति अनयोर्योगयोर्नाम्नः प्रत्ययविधिः तेन पदकार्येन सज्
रिवाचरति सज्जुष्यते मरुत्वत्पते वाच्यते स्रजयति पततीति पत् तमाचष्टे पतयति ञ्नकारउभयपदार्थोपलब्धार्थश्च ननु वृद्धौ चरितार्थः कथं पाऽऽ
नोर्हेतुरितिमेव उच्चारणसामर्थ्यात् वृद्धिमात्रार्थत्वेनु णिरित्येव पठेत् तेन णिरिति सूत्रं कर्तव्यं भवति अत्राऽदादेर्लुगित्यतो लुगित्यनुवृत्त्या वा कथमे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चं०आ०
ल०भा०
३२

देनव्याख्येयं नाम्नोऽवयवस्य कर्मत्ययस्य लुक् औकं स्ववधमाचष्टे णिजप्रत्यये मदामित्यऽप्रत्ययस्य लुग् अकृतव्यूहेति निमित्तापायेतिन्यायेन वा
वधादेशाऽभावः इह पूर्वपदं पृथक्क्रियते संग्राममयुद्ध इति सामान्यापेक्षज्ञापकात् तस्य च हन्त्यर्थकर्मत्वान्नतो द्वितीयाहनो घ इति घ आदेशः कंसघा
तयति एवं बलिं वधं राजागमनं चाऽऽचष्टे बलिं वधयति राजानमागमयति यद्वाऽव्यविकन्यायेन नाम्नो विग्रह एव हनादेर्धातोः प्रेरणे णिप्र
त्यय इति वक्ष्यते ८७ धातोरिति योगो विभजनीयः यङ्कतु प्रित्यतो यगित्यऽनुवर्त्य धातोर्यगिति व्याख्येयं स च कण्ड्वादिभ्य एव लक्ष्यानुसारात्।
कण्ड्वादयो द्विविधाः धातवो नामानि च कण्डूञ् गात्रविघर्षणे नाम्नां तु विग्रह एव कण्डूं करोति प्रेरणा करण इत्यनुवर्तते क्रियाविषयके प्रेरणे वा
च्य धातोर्णिः प्रत्ययः स्यात् प्रेरणं चाऽनेकविधं भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणं ज्ञात्वा गुर्वादेराऽऽराध्यस्य प्रवर्तनाऽध्येषणं प्रार्थना यस्याऽनु
मतिमन्तरेणाऽर्थान प्रवर्तते तस्य राजादेरनुमत्या प्रेरकत्वं वैद्यादेस्तु सुखोपायप्रदर्शकं पिबत ज्वरित इत्याद्युपदेशेन प्रेरकत्वं यः पुनः केनचिज्जिगा

॥धातोः प्रेरणे॥ ८८ ॥

सितं पलायमानं निरुणद्धि निरुद्धश्च हन्यते तत्र निरोद्धा हन्तुरनुग्रहं करोतीत्यनुग्रहेण तस्य प्रेरकत्वं एवं चोरस्य वासावकाशादिप्रदस्याऽप्यनुकूला
चरणेन प्रेरकत्वं सर्वेष्वायं विशेषः प्रकरणादिगम्यः सर्वत्रानुगतं प्रेरणमात्रं त्वर्थः ननु प्रेरणे इति धातोर्विशेषणमस्तु प्रेरणे वर्तमानाद्धातोर्णि
रिति स्वार्थपचति पाचयतीत्युक्ते व्यक्तमर्थान्तरं गम्यते तत् कथमऽयं स्वार्थिकः इह हि कः पचेरऽर्थः याऽसौ तण्डुलानां विक्लित्तिः अधिश्रयणा
दीनां तु तादर्थ्यात्तद्व्यपदेशेन च पच्यर्थता यो हि पानार्थमुदकमाऽऽहरति विक्लित्त्यर्थं च काष्ठानि आहरति शीतं चापनेतुमग्निं समिन्धे पेषणं च
तण्डुलान् प्रक्षालयति नासौ पचतीत्युच्यते तत्कस्य हेतोर्विक्लित्तिं प्रतिसाधनत्वाऽभावात् तद्वच्छेदाऽभावाच्च अतस्तादर्थ्यादेवाधिश्रयणा
दीनां पच्यर्थता तद्वत्प्रेरकव्यापारोऽपि तादर्थ्यादेव पच्यादिवाच्यो भविष्यति णिप्रत्ययस्तु द्योतकः तथा च योऽप्येकान्ते तूष्णीमासीनो भक्तवी

३२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जंवल्लीवर्दैः प्रतिविधत्ते सउच्यते पंचभिर्हलैः कृषतीति तदेवं द्योतकपक्षेऽपि संभवति न च यथा प्रकृत्यऽभिहिते णिर्भवति एवमुक्तेऽपि
तादृशाद्धाऽभिहितेऽपि स्यात् उक्तः करोति प्रेषितः करोति प्रेरणविषयार्थत्वात्करोत्यर्थस्य प्रत्ययार्थपक्षे तु कार्थत्वात् णेरभाव इति वाच्यं उ
क्तार्थत्वात्प्रेरकव्यापारद्योतनार्थो णिः प्रयुज्यते तस्य स्वशब्देनैव द्योतितत्वात् इह तर्हि पाचयत्योदनं चैत्रो मैत्रेण इह्योः कर्त्रोः प्रत्ययेना
भिधानं प्राप्नोति पाचयतश्चैत्रो मैत्र इति प्रत्ययार्थपक्षे तु प्रकृत्यर्थोपसर्जनस्याऽप्यस्य प्राधान्यात्तस्यैव कर्त्तरि प्रत्यय इति दोषाभावाद्द्योतक
तापक्षो ग्राह्यः किं चान्वयव्यतिरेकाभ्यां शब्दाऽर्थोऽवसायः न च पचति पठति गच्छतीत्यादावन्तरेण णिं कश्चिदपि प्रयोजकव्यापारोऽवसी
यते उत्पन्ने तु णौ प्रतीयते अतस्तदर्थत्वमेव युक्तं किं च एवं च सति अणादेरप्यऽपत्याद्यर्थो द्योत्य एव स्यात् पंचभिर्हलैः कृषतीत्यत्र त्वनेकार्थत्वा
द्धातूनां कार्षिरेव प्रतिविधानेऽपि प्रवर्त्तते इत्युक्तं न पुनस्तदृशेनेन सर्वत्र प्रकृत्यर्थत्वं नन्वत्र पक्षे भेदिकाविभिन्नादेवदत्तस्य यज्ञदत्तस्य का
ष्ठानामिति कृद्योगलक्षणा षष्ठी न प्राप्नोति अप्रधानत्वात् भवत्ततीयावद्धविष्यति तद्यथा पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्यकर्त्तर्ये
प्रधानेऽपि तृतीया भवति व्याप्तेः ननु भिक्षावासयति कारीषोऽग्निरध्यापयतीति णिर्न स्यात् प्रवर्त्तनस्य चेतनधर्मत्वादिति चेन्नाऽचेतनस्याऽ
पि तत्संभवात् नाऽवश्यं स एव वासं प्रयोजयति यस्त्राहो व्यतामिति यो पि तूष्णीमाऽऽसीनस्तत्समर्थमाचरयति सोऽपि वासं प्रयुंक्ते भि=
क्षाप्रचुराश्च व्यंजनवत्यश्च लभ्यमाना वासं प्रयोजयंति तथा कारीषोऽग्निर्निर्वातः एकांते सुप्रज्वालितः शीतकृतमध्ययनविरोधिनमुप
द्रवमऽपनयन् अध्ययनेऽनुकूलो भवति तत्र यथाऽनुमतिरूपदेशोऽनुग्रह इत्येतेषु णिर्भवति तथाऽत्रापि भविष्यति यद्यऽनुमत्यादिषु
प्रयोज्यव्यापारोपदेशेन प्रवृत्तिः इह तु न तथा तत्याप्याऽऽनुकूल्याचरणमेव प्रयोजकव्यापारत्वेनाऽध्यारोप्यते अथ कश्चित्कंचिदाह प्र
च्छतु मां भवान् अनुयुंक्तां मां भवानिति तत्र प्रष्टा प्रयोज्यः तस्य प्रेरकः प्रयोजकः इति तद्व्यापारे णिः प्राप्नोति एकविषयत्वान्नैष दोषो वादी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वै. आ
ल. भा
३३

नां च पर्यायप्रसंगः उच्यते प्रयोज्यप्रकृत्युपहितप्रयुक्तिर्ण्यर्थः केवला न तु वाच्यार्थ इति तदुक्तं द्रव्यमात्रस्य तु प्रैषे प्रेष्टा द्वेधा द्वितीयते सक्रियस्य यदा प्रैषस्तदा स विषयो णिच इति वासुदेवेन कंसं घातयति काथिकोऽस्त्र न करोतीत्यत्र कथमिति उच्यते ये कंसानुकारिणां नटानां व्याख्यानोपाध्यायाः ते कंसानुकारिणं नटं सामाजिकैः कंसबुद्ध्या गृहीतं तत्ता दर्शनेव वासुदेवेन घातयन्ति येपि चित्रं व्याचक्षते इयं मथुरा अयं प्रासादः अयं कंसः अयं भगवान्वासुदेवः प्रविष्टः एताः कंसकर्षिण्यो रज्जव एते उग्रनिपाताश्च प्रहाराः अयं हतः कंसः अयमाकृष्टः इति ते पि चित्रगतं कंसं तादृशेनेव वासुदेवेन घातयन्ति चित्रेऽपि हि तद्बुद्धिस्थं पश्यतां एतेन चित्रलेखका व्याख्याताः येपि ग्रन्थं वाचयन्तः कंसवधमाचक्षते काथिकानामेतेषुत्पत्तिप्रभृत्याविनाशात्कंसादीननुवर्णयंति तेऽपि वर्ण्यमानाः श्रोतृणां बुद्धिस्थाः प्रत्यक्षवद्भवंति चित्तमपि च नेषां तत्सुलकमिव भवति अत एव नानापक्षमाश्रिता भवंति केचित्कंसभक्ताः केचिद्वासुदेवभक्ताः वर्णान्यत्वमप्यपुष्यंति केचिद्रक्तमुखाः केचि

॥ चुरादेः ॥ ८९ ॥ सधातुः ॥ ९० ॥

त्कालमुखाः त्रैकाल्यमपि लोके लक्ष्यते कथायां वाच्यमानायां हि वक्तारो भवंति गच्छ हन्यते कंसः गच्छ घातिष्यते किं गतेन हतः कंसः तदेव काथिकोऽपि बुद्धिस्थकंसं बुद्धिस्थेन वासुदेवेन घातयति श्रोताऽपि शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान्प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते एवं बलिं बंधयति राजानमागमयतीत्यादावपि द्रष्टव्यं ८८ चुरम्भादिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः अनुवृत्तावयवभेदसमुदायस्याऽन्यपदार्थत्वेनाऽऽश्रयणादेकवचनं चुरादेर्धातोर्णिच् प्रत्ययः चोरयति चोरयते चुरादयो निजामा निपठितानि तेभ्यस्तु वचनसामर्थ्यान्णिः हस्तिनाऽतिक्रामति हस्तयति ८९ अत्राऽनंतरोऽपि णिच् न परामृश्यते सन्ग्रहणवैयर्थ्यप्रसंगात् आनंतर्यादेव तदनुवृत्तिसंभवात् नापि व्यवहितस्तिबादिः आदेशादिविधायकप्रकरणेन विच्छेदात् अतो यङादिरेव परामृश्यते यङादिना च प्रत्ययग्रहणपरिभाषया तेदंत

३३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गृह्यते तेषां केवलानां संज्ञाप्रयोजनाभावाद्बोबोभूयते इत्यादि प्रागुदाहृतं यत्तु सनाद्यन्ता धातव इति सूत्रं तत्तु सधातुरिति कर्त्तुं युक्तं तच्छ
ब्देन सनादयः परामृश्यन्ते पूर्वविहितत्वेन प्राधान्यात् सर्वादेरुत्सर्गतः प्रधानपरामर्शित्वात् ननु सनादिपरामर्शी पृतदतस्य संज्ञा न स्यात्
संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावादिति चेन्न सुप्तिङन्तमिति ज्ञापकात् सिद्धं स्यात् तस्याः सार्वत्रिकत्वेनाऽऽश्रयणात् केवला
नां धातुसंज्ञाप्रयोजनाऽभावाच्च ननु सन्यङोरिति द्वित्वप्रयोजनमस्ति कथं जाद्स्तदभावात् स्तौति ण्योरेव षण्यभ्यासात् सः स्विदि स्वदिस
हीनां च गुणो यङ्लुकोरित्यादिसूत्रे वैयर्थ्यप्रसंगाच्च यद्वा भूवादयो धातव इत्यस्याऽनन्तरं सङिति सूत्रं णीयसूनः सकारादारभ्य णिङो
ङकारेण प्रत्याहारः यत्तु चङ्ङोर्ङकारेणाऽपि प्रत्याहारः संभाव्येतेत्युक्तं तन्न व्याख्यानतो विशेषप्रतिपत्तिसंभवात् अन्यथाऽऽसु
पीत्यादौ डाप्स्वापौ वा पकारेण सुप्प्रत्याहारः स्यात् यद्वा सप्तिङिति सूत्रमस्तु आद्यन्ताभ्याम वयवाभ्यां संदंशन्यायेनाखिलसत्ते तः समुद

॥ भ्वादिः ॥ ९१ ॥

योधातुसंज्ञ इति तस्याऽर्थः ९० भवनं भूः क्रियासामान्यं संपदादिः अन्तर्तौ द्वियेणव भाति अर्थमित्याऽदिः आगमजमनित्यमिति ननु
म् यद्वा अयते संवद्वा आदीयते गृह्यतेऽर्थोऽनेनेत्याङ्ः परा ह्यजः किः शब्द इति यावत् भुवः क्रियासामान्यस्य आदिर्वाचकः शब्दो धा
तुसंज्ञः एवं सत्याऽऽणवयेत्यादावपभ्रंशे हि ह्यादीयते गृह्यतेऽर्थोऽनेनेत्याङ्ः पराद्धाजः किः शब्द इति यावत् भुवः क्रियासामान्यस्य
आदिर्वाचकः शब्दो धातुसंज्ञः एवं सत्याऽऽणवयेत्यादावपभ्रंशे हि रुक्नानेत्यादावव्ययेव बभूव बभूवे इत्यादावाख्या तेवाऽतिप्रसंग
स्तहारेणार्थं भ्वादिरित्याऽऽवर्त्य भूरादिर्यस्येति बहुव्रीहिर्व्याख्येयः आवृत्त्यादौ च भ्वादिरिति पाठ एवमानमन्यथा भ्वर्थ इत्येवाऽवस्यत् आ
दिशब्दस्य व्यवस्थायां तेन भूशब्दादाऽऽदयेयेय पठिताः ते ग्राह्याः तेन क्रियावाचित्वे सति भ्वादिगणपठितत्वं धातुत्वम् नामधातूनां तु सधातु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रितिवचनाद्धातुत्वं सौत्रास्तु गणे एव पाठ्याः यद्वास्तंभ्वादीनामुद्दिष्करणात्तेषां धातुत्वं ज्ञाप्यं तेन हि स्तंभित्वा लब्ध्वेतीट् विकल्पार्थं कृतम्
त्वाच धातोर्भवति धातुत्वाभावे त्वेवनास्तियद्वा सइत्यनुवर्त्यसप्रसिद्धो यो भ्वादिः पठितोपलक्षितार्थविशिष्टः स धातुसंज्ञ इत्यर्थः यद्वा
प्रायपाठात् यावादिषु नातिप्रसंगः भूसधस्पर्द्धादयः क्रियावाचकाः पठितास्तन्मध्यपतिता यावादयोऽपि क्रियावाचका एव गृह्यन्तु सुपि
तानद्रव्यविकल्पवाचकाः यद्वायाशब्दस्य न धातुसंज्ञा लाक्षणिकत्वात् यदः स्यादेरत्परत्वे आपि च येति सिद्धं लाक्षणिकस्यापि ग्रह
णे गामादाग्रहणेष्व विशेष इति व्यर्थं स्यात् वा शब्दस्य धातुत्वे किं स्याद्धि कल्पार्थे गंधनादावि वर्त्तातीति रूपं स्यादिति चेन्न अव्ययादिभक्तेर्लु
गित्युत्ति वादेर्लुकः संभवात् इत्थं च विभक्तिग्रहणस्यापि तत्र सार्थक्यं लभ्यते अन्यथा सिपः स्यादेर्वा वक्ष्यत सर्वादिपठितस्य उभ शब्दस्य
धातुसंज्ञा प्राप्नोति उभउभेत्यत्र पाठादिति चेन्न पाठेऽकारस्योच्चारणार्थत्वात्सर्वादौ तु विवक्षितत्वात् रूपसामान्याभावात् किंच सर्वादिम
ध्ये पाठसामर्थ्यान्न उभकाविन्यादि रूपसिद्ध्यर्थं हि पाठः धातुत्वे सति सन सिद्ध्येत् द्यौरिवावितिस्वर्गवाचकस्य न धातुत्वं अनुदित्त्वात् म
णे वोदित्तस्य पाठात् तदनुबंधकग्रहणेनाऽतदनुबंधकस्येति न्यायात् कुंडलिनं चेत्त्रमानयेत्यादौ अकुंडलिन आनयनाऽदर्शनाच्चा
ऽनयारीत्याऽन्यत्राप्यतिप्रसंगः परिहार्यः यत्तु धातुरिति पूर्वाचार्यसंज्ञाग्रहणात्तेष्वपि तेषां क्रियावाचकोगृह्यते इतिनातिप्रसंग इति त
न्न इत्याहि सूत्रे वैयर्थ्यापातात् प्रथमेत्यादिवत् न तत्संज्ञयैव व्यवहारसंभवात् अत्र कश्चिदाह धातोः क्रियावाचिनः प्रत्यय इत्यत्र किं प्रम
णमिति उच्यते भगवतः पाणिनेर्वचनं भूवादय इति भ्वर्था वादयो भूवादय इति हि तदर्थः यदि तु गणपाठ तत्त्वमात्रं विवक्षितमभविष्य
त् तदा भ्वादय इत्येवावक्ष्यत भुवो वार्थं वदंतीति भ्वर्था वा वादयः स्मृताः इति कात्यायनवचनमपि मानं क्रियावाचकाभ्वादय इति हि तस्या
र्थः समानशब्दानां प्रतिषेध इति हि नागनाथवचनमपि मानं अक्रियावचनेष्वतिप्रसंगवारणार्थं हि तत् यास्कवचनमपि भावप्रधानमाख्या



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तं सत्त्वप्रधानानि नामानीति भावः क्रिया आख्यातं धातुः आख्यायते फलभावने अनेनेति व्युत्पत्तेः ननु प्रसिद्धं प्रत्ययमाख्यातशब्दस्यार्थं वि
हायैव कथं व्याख्यायते इति चेत् शृणु सत्त्वप्रधानानि नामानीति साहचर्यात् अन्यथा सुपस्त्येवाऽवक्ष्यत् अतः प्रकृतिसाहचर्याद्धातुरेव
गृह्यते न तु प्रत्यय इति तथा परज्ञातानामाख्याऽऽतोपसर्गा इति तैनैवोक्तं अत्राऽपि प्रकृतिसाहचर्याद्धातुरेवाख्यातशब्देन ग्रहीतुमुचितः सा
ध्यत्वेन क्रिया तत्र धातुरूपनिबंधना सिद्धरूपस्तु यस्तस्याः सघञादिनिबंधन इति हरिणाप्युक्तं धातुवाच्यायाः क्रियायाः साध्यत्वेऽपि द्वैवचनं
मानमिति दिक् का पुनः क्रिया उच्यते करोत्यर्थभूता उत्पादनाऽपरपर्याया उत्पत्त्यनुकूलव्यापारसंतानरूपा भावनैव क्रिया तथाहि अभव
तो गगनादेरक्रियमाणत्वाभवतश्च घटादेः क्रियमाणतया भवत्यर्थकर्तुः करोतिकर्मत्वं तथा च करोत्यर्थकर्तुर्भवितृप्रयोजकतया भवते
रुत्पत्त्यर्थात्प्रयोजकव्यापारेऽभिरुत्पद्यमानः करोत्यर्थमवलंबते उक्तं च करोतिः क्रियमाणेन न कश्चित्कर्मणा विनाभवत्यर्थस्य कर्ता च करोतेः
कर्म जायते करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते प्रयोज्यकर्तृकैकांतव्यापारप्रतिपादकाः ण्यंता
एव प्रयुज्यंते तत्प्रयोजककर्मसु तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः प्रयोजकक्रियामाहुर्भावनां भावनाविद इति सर्वधातवो धातुत्वेन त
स्या वाचकाः अत एव किं करोतीति प्रश्ने पचति पठतीत्याद्युत्तरं संगच्छते प्रातिस्विकेन रूपेण पुच्चित्वादिना विक्लित्यादेः फलस्य वाचकाः फल
तु प्राधान्येन व्यापारे साध्यत्वेनान्वेति ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ क्वचित् साधनत्वेनाऽन्वेति क्रिया च व्यापारत्वेन धातोर्वाच्या न तु फूत्का
रत्वयत्नत्वादिरूपेण पचतीत्युक्ते फूत्कारादेरप्रतीतेः क्वचित्प्रकरणादिना तत्प्रतीतावपि समुदायवृत्ताः शब्दा अवयवेऽपि वर्तंते इति न्यायो वा
च्यः तदुक्तं गुणभूतैरवयवैः समूहः क्रमजन्मनां बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते न चाऽसौ मीमांसकोक्तरीत्याऽऽख्यातवाच्यैवास्तामि
ति वाच्यं भोक्तव्यमित्यादावाऽऽख्यातं विनाऽपि तत्प्रतीतेः तथा च तत्राऽपि कारकाऽपेक्षा दृश्यते अस्ति च तत्रापि करोतिसामानाऽधिकरण्य

किंकर्तव्यं भोक्तव्यं किं कृतवान् भुक्तवानिति किंच भावयति घटमिति वक्तव्ये भवति घटमित्यपि स्यात् तुल्यार्थत्वात् दृष्टांते हि कर्तुः कुंभ
कारस्य व्यापारं ज्ञिराचेष्टा दृष्टांतिके त्वाऽऽख्यातप्रत्ययः ननु प्रयोजकव्यापारोऽन्यर्थः कर्तृव्यापारस्त्वाख्यातार्थ इति वैषम्यमिति चेत्
कारकचक्रप्रयोक्तुः कर्तृत्वे घटस्याऽतथात्वात् यदि तु धातुनोक्तक्रियनित्यकारके कर्तृतेष्यते इति भर्तृहरिप्रतिपादितरीत्या प्राधान्येन
धातूपात्तव्यापाराश्रयत्वरूपं कर्तृत्वं तत्राऽपि संमतं तर्हि दानीमाख्यातार्थः व्यापारस्य धातुनैवाऽभिहितत्वात् अपि च धातोः सकर्म
काऽकर्मकत्वविभागउच्छिद्येत ननु सिद्धांतेऽपि क्रियायाः कर्मापेक्षानियमात् कथमकर्मकतेति चेन्न फलव्यापारयोः सामानाधि
करण्यवैयधिकरण्याभ्यां सकर्मकाऽकर्मकत्वविभागस्य संभवात् अथ स्ववाच्यव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वं स्व
वाच्यव्यापारसमानाधिकरणफलवाचकत्वमकर्मकत्वमिति तव मते मया तु स्वोत्तराख्यातवाच्यव्यापारव्यधिकरणफलवाचक
त्वं सकर्मकत्वं स्वोत्तराख्यातवाच्यव्यापारसमानाधिकरणफलवाचकत्वमकर्मकत्वं धातोः सेद्धाऽनिह्नवदिति वाच्यमिति चेत् न घटो
भवतीत्यत्राऽतिप्रसंगस्य सत्वात् भावनायाः कुलालाश्रयत्वात् फलस्य चोत्पत्तेर्घटाश्रयत्वात् अथ व्यापारव्यधिकरणसमानाधिकर
णत्वमेवाऽकर्मकत्वादेर्लक्षणं ब्रूषे तथाप्युक्तातिप्रसंगस्तदवस्थ एव कारकचक्रप्रयोक्तुः कर्तृत्वाऽभ्युपगमात् किं च धातोः फलं आख्या
तस्य च कर्ता वाच्यः भावनैवाऽऽक्षेपलभ्येति स्वीकुर्वन् च तथा सति प्राधान्यप्रतीतिर्न स्यादिति वाच्यं व्यक्तिवदुपपत्तेः तव मते हि गवादिश
ब्दानां जातिरेव वाच्या व्यक्तिस्त्वाक्षेपलभ्या वाहदोहादौ तस्या एव प्राधान्यं साक्षादन्वयात् तद्वद्भावनाया अपि भविष्यति किं चाक
त्यधिकरणोक्तरीत्या भावनात्वमेव वाच्यं स्यात् तव मतेन भावनात्वस्य घटादिष्वराऽऽक्षेपात् ननु क्रियाया धात्वर्थत्वे पचतीत्यादौ एककर्तृ
का वर्तमाना पचिक्रियेति क्रियाविशेष्यको बोधो न स्यात् प्रत्ययार्थं प्रति प्रकृत्यर्थस्य विशेषणतायां ओपगवादौ क्लृप्तत्वादिति चेन्न अज्ञा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गौरीत्यादौ आवीयो वाच्यः स्त्रीत्वमिति पक्षे स्त्रीत्वस्यैवैन्द्रे देवीत्यादौ आमिक्षां देवतायुक्तां वृत्त्यैवैषत द्धित इति भट्टपादोक्तेस्तद्धितार्थस्य देव
तायाश्च विशेषणत्वांगीकारात् आख्यातार्थस्य कर्तुरपि विशेषणत्वोपपत्तेः किंच युष्मदि समानाधिकरणे मध्यमः अस्मद्युत्तम इत्यादि
पुरुषव्यवस्था त्वन्मतेन संभवति युष्मदस्ति वादिवाच्यकारकवाचित्वाऽभावात् उक्तेः कर्तरि प्रथमेत्यादिवचनस्यात् कर्तुः प्रत्ययेनाऽनुक्तेः
न च समानाधिकरणे इत्यनेन स्वाभिधेयसंख्यान्वयित्वं अभिहित शब्देन चाभिहितसंख्याकत्वं विवक्षितमिति वाच्यं सूत्राऽननुगुण
त्वात् कृत तद्धित समासैः संख्याया अनभिधानात्तदभिहितेन तृतीया प्रसंगात् न च कृत्यनभिधानमेव कर्तुरनभिधानमिति वाच्यं भावार्थ
प्रत्ययेऽपि कर्तरि प्रथमापत्तेरिति दिक् तार्किकास्त्वन्यथैते दोषास्तुल्याः तेहीत्थमाहुः आख्यातस्य यत्नोऽर्थः यत्नत्वस्य जातिरूपस्याऽव
च्छेदकत्वलाभात् न कर्ता कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात् यत्नार्थकं करोति नासर्वाख्यातविवरणदर्शनाच्च रथो गच्छतीत्यादौ य
त्नाभावाद् व्यापारे लक्षणा यत्नो हि प्रथमान्तार्थे विशेषणमाश्रयत्वं च संसर्गः पचति चैत्र इत्यस्य पाकानुकूलकृतिमान् चैत्र इति प्रथमा
न्तविशेष्यको बोध इति अत्रोच्यते कृतिमान् कर्तेति नाऽस्मन्मते लक्षणं किंतु धातूपात्तव्यापाराश्रयः कर्तेति व्यापारस्य धातुनैवोपादा
नात् नाऽऽख्यातस्य तदंशे शक्तिः कल्प्या यत्नस्यापि व्यापारविशेषत्वेन धातुत एव लाभात् न तत्राख्यातस्य शक्तिः किंत्वाश्रये आख्या
तस्य शक्तिः आश्रयत्वे च शक्यतावच्छेदकं तच्चाऽखण्डोपाधिरूपमिति न जातित्वदोषः यद्वा आश्रयत्वमेव वाच्यं तद्देवतादात्म्येनाऽवच्छे
दकं च रथो गच्छतीत्यत्र त्वया त्रितयं कल्प्यं शक्तिज्ञानमनुपपत्तिज्ञानं शक्यसंबंधज्ञानं च मम तु शक्तिज्ञानमेवैकं कल्प्यमिति लाघवं अ
थ यदि निरूढलक्षणा स्वीक्रियते तर्हि सा शक्तितो नाममात्रेण भिद्यते नार्थः अनादित्वस्योभयोस्तुल्यत्वात् करोति नैयत्नार्थकोऽकर्मक
ताऽऽपत्तेः फलस्थानीय यत्नवाचका हि यत्याद्योऽकर्मका दृष्टा न हि भवंति घटं यतते इति एवं घटं करोतीत्यपि न स्यात् करोति नाऽऽ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ख्यातविवरणमसिद्धंकरोतिर्हिधातोर्विवरणंनाऽऽख्यातस्यआख्यातस्यत्वाऽऽख्यातएवकिमत्रविनिगमकमितिचेत्शृणुविना
प्याऽऽख्यातंकृत्सुकरोतिनाविवरणंदृश्यतेपक्तापाचकःकर्त्तापक्ववान्पाकंकृतवान्इतिधातुस्तूभयत्रानुगतोऽस्तिकिंचकृञोयत्ना
र्थकत्वेकर्मकर्तरिप्रयोगोनस्यात्अकर्मकाणांकर्मणोऽभावात्तस्यकर्तृत्वाऽसंभवात्अस्मन्मतेत्वाऽऽश्रयोऽर्थःतत्रसंख्याऽन्वे
तिकर्तृप्रत्ययेसव्यापारेऽन्वेतिकर्मप्रत्ययेतुफलेकालस्तूभयत्रव्यापारओदनंपचतिस्थाल्यांचैत्रःएकोदनाभिन्नाश्रयकपाकविक्लि
त्तिसदनुकूलैकचैत्राभिन्नाश्रयकस्थाल्यऽभिन्नाश्रयकोवर्तमानोव्यापारःओदनःपच्यतेचैत्रेणेत्यत्रएकोदनाऽभिन्नाश्रयका
याविक्लित्तिस्तदऽनुकूलएकचैत्राभिन्नाश्रयकोवर्तमानोव्यापारःअत्राऽऽश्रयस्तुतृतीयार्थइतिप्रथमान्तविशेष्यकेपक्षेपश्यमृगो
धावतीतिनसिध्येत्पश्यधावन्तंमृगमितिस्यात्सरणक्रियाविशेषस्यमृगस्यदर्शनेकर्मत्वात्द्वितीयास्यात्तत्सामानाधिकरण्यात्तर्हि
रपिसत्तास्यात्नचतमित्यध्याहार्यंगौरवाद्वाक्यभेदापत्तेश्चनचेदमेकंवाक्यंनेतिवाच्यंनागनाथादिभिरेकवाक्यत्वस्यस्वीकारात्नच
ऽत्रमृगादिदर्शयिषितःतथासतिमृगंपश्येत्यस्यसुवचत्वात्धावतीत्यस्यवैयर्थ्यप्रसंगात्सिद्धान्तेतुशीघ्रसरणमेवदिदर्शयिषितंतस्य
मृगाश्रयत्वात्मृगाश्रयोपादानेतिवत्तातुनद्वितीयानामत्वाऽभावात्भावनायाःप्रत्ययार्थत्ववदन्प्रष्टव्यःयःप्रत्ययार्थःसप्र
धानमित्युच्यतेत्वयाकिंवायःप्रधानंसप्रत्ययार्थइतिनाऽऽद्यःसंख्याकालयोःप्रत्ययार्थयोरपिप्राधान्यादर्शनात्नाऽन्त्यःचित्रग्वा
दौप्रधानस्याऽन्यपदार्थस्यप्रत्ययार्थत्वादर्शनात्तस्माद्धातुवाच्याक्रियाविशेष्येत्यत्रनकश्चिद्दोषइतिदिक्नन्वस्तिभवतिविद्य
तिषुक्रियावाचित्वमव्याप्तंनहितत्रोत्पादनाप्रतीयतेएवंतिष्ठताऽवपितथाजायतेउत्पद्यतेइत्यत्राऽप्युत्पत्तिर्हिआद्यक्षणसंब
धःतदनुकूलव्यापारश्चोत्पादनातदऽनुभवश्चास्त्यादिभ्योनास्त्येवअतएवकिंकरोतीतिप्रश्नेपचतीत्यादिवदस्तीतिनप्रतिब्रुव



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ते इतिचेत् उच्यते अस्तीत्यादेः स्वरूपधारणं करोतीत्यर्थः धारणंचोत्तरकालसंबंधस्तथासत्यऽपिकरोत्यऽर्थेनधात्वर्थो तरगतेनधोरणेनैवभाव्याकांक्षायाः पूरणाज्जीवतिनृत्यतीत्यादिवदकर्मकताऽस्त्याहिव्यापारव्यधिकरणेवात्पत्तिरुच्यते अत एवतत्रघटादीनांकर्मतापरसमवेतव्यापारफलीभूतोत्पत्तिशालित्वात् जनिप्रभृतिभिस्तुव्यापारसमानाधिकरणेवोच्यते अतए वाऽकर्मकतातेषांस्वात्मत्यऽनुकूलव्यापारभाजामऽपिसूक्ष्मरूपापन्नघटादीनांपरसमवेतत्वघटितकर्मताविरहात् तदुक्तंचहरिणा आ त्मानमात्मनाविभ्रदस्तीतिव्यपदिश्यतेइति अन्येत्वाहुः अस्त्यादावपिधर्म्यंशोभाव्यस्त्येवहिभावनेतिदिक् ॥ ॐ ॥ हाटकेश पुरस्थायीविनायकसुतोऽकरोत् रघुनाथाभिधोव्याख्यांतिङन्तस्ययथामति ॥१॥ नत्वाभ्यर्थितसिद्धिदंगणपतिंवाग्देवतां भाषिते सूत्रेश्रीरघुनाथनिर्मितमिदंभाष्यंलघुव्याकृतौ लोकानांहितमङ्क्यामिमनसाराममोद्य सारस्वतःपौत्रःश्रीमणिरामशर्म विदुषःश्रीरामदत्तात्मजः ॥१॥ समाप्तं शुभं ॥

वाराणसीप्रसादस्यनियोगेन प्रयत्नतः ॥ काशीसंस्कृतमुद्रायामंकितोयंशिलाक्षरैः ॥१॥ श्रीकाशीजीमेमहल्लेहौदकटोराश्री युतबाबूवाराणसीप्रसादजीकेमकानमेंकाशीसंस्कृतमुद्रायंत्रमेछपी जिनकोलेनाहोय उनकोउक्तस्थानमेश्रीबाबूवाराणसी प्रसादजीकेपासयाकचौडीगल्लीमेंभाई प्रतापसिंहजीकेदुकान पर मिलेगी ॥ संवत् १९४३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीगणेशाय नमः ॥ धातोः इदमधिक्रियते भ्वादिः क्रियावाची भ्वादिर्धातुसंज्ञकस्स्यात् आदनुदात्तङितः अनुदात्तेतो ङितश्च धा
तोरात्मने त्वरितेतः उभे ञितः स्वरितेतश्च धातोरात्मनेपदस्तः परतोऽन्यत् उक्तनिमित्तहीनाद्धातोः परस्मैपदं तिबादीनामाद्यानि नववच
नानि परसंज्ञानि परस्मैपदं स्यात् पराणि नववचनानि आत्मनेपदानि स्युः नाम्नि युष्मदि च अस्मदि च भागे । तिबाद्येकार्थेषु नामादिषूपपदे
ष्वेते प्रत्यया स्त्रिविभागेः स्युः रात्मयोः नाम्नि प्रयुज्यमाने चादः प्रयुज्यमाने प्रथमः युष्मदि मध्यमः अस्मदि उत्तमः कर्तरि शप् च वादात्
ष्वेते प्रत्यया स्त्रिविभागेः स्युः रात्मयोः नाम्नि प्रयुज्यमाने चादः प्रयुज्यमाने प्रथमः युष्मदि मध्यमः अस्मदि उत्तमः कर्तरि शप् च वादात्
भूसत्तायां वर्तमाने निपतस् अन्ति सिप् थस् थ मिप् वस् मस् त आते अन्ते से आथे ध्वे ए वहे महे वर्तमानार्थे क्रियार्थे लड् तोलिवादयः प्र
त्यया भवंति एषां संज्ञा लट् अपकर्तरि कर्त्रर्थेषु तिबादिषु चतुर्षु दिष्वर्थे परतो धातोरपस्यात् गुणः नाम्यतस्य धातोर्गुणो भवति प्र
पित्तादि ङितप्रकारे तन्तादिकं च विहाय अन्यप्रत्ययो ङित् इत्स्यात् क्ङिति सिक्ङिति ङिति च परे वृद्धिगुणौ न द्विर्वचन हेतु के ऽसि गुणः
स्यात् इति तसि गुणा प्राप्तो अपनिमित्तो गुणः भवतः अदे आतो लोपो भवत्यकारे च परे भवति भवसि भवथः भवथ भवामि भवामः परयोः
त आत्वं स्यात् भवामि भवावः भवामः स भवति त्वं भवसि अहं भवामि युगपत् प्राप्तो परः स च त्वं च भवथः अहं च त्वं च भवावः अहं च त्वं च
सभवामः विधिसंभावनयोः यात् याताम् युस् यास् यातं यात याम् याव याम ईत ईयातां ईरन् ईथास् ईयाथां ईध्वं ईय ईवहि ईमहि विधिः
कर्तव्यार्थोपदेशः संभावनं कल्पनं तत्र यादादयः एषां संज्ञा लिङ् या अतः परो या ईः स्यात् भवेत् भवेतां युस इट् अतः परस्य युस इडागमः स्या
त् भवेयुः भवेत भवेत यामियं अतः परो यामियं स्यात् भवेयं भवेव भवेम शिष्यो गुरुशुश्रूषको भवेत् विधिः भवेद्सौ वेदवित् ब्राह्मणत्वात् आ
शीः प्रेरणयोः तुप् तां अन्तु हि तं त आनि प् आव प् आम प् तां आतां अन्तां स्व आथां ध्वं ऐप् आवहैप् आमहैप् आशीः प्रार्थनं आशीः परस्मैपदं आ
शीः प्रेरणयोः तुप् तां अन्तु हि तं त आनि प् आवप् आमप् तां आतां अन्तां स्व आथां ध्वं ऐप् आवहैप् आमहैप् अप्राप्त प्रार्थनमाशीः परस्मैपदं
प्रेरणं नवा प्रेरणं भवते नन्तत्र तुवादयः एषां संज्ञा लोट् तुह्योस्तातङ्राशिषि वा भवतु भवतात् भवतां भवन्तु अतः अतः परस्य हेर्लुक् स्यात् भव



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवतात् भवतंभवत भवानिभवावभवाम अध्ययनायोद्यतोभवसौम्य आयुष्मान् भवतु भवान् अनद्यतनेऽतीते दिप्तां अन् सिप् तंत अ
मिप् वमतन आता अंतथास् आथां ध्वंइ वहिमहि अतीतायारात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमंयामद्वयं दिवसः सकलः सोद्यतः
नः नास्त्यद्यतनोयस्मिन्नतीतेकाले तत्रदिवादयः एषांसंज्ञालङ् दिसिमीनामिकारोच्चारणार्थः दिवादावट्धातोः अभवत् अभवतां अभ
वन् अभवः अभवतंअभवतअभवंअभवावअभवामह्योभवत् लव्सूत्रः परोक्षे णप् अतुस् उस् थप् अथुस् अ णप् वम एआते इरेसे आथे
ध्वेएवहेमहे। धातोः परोक्षेऽतीतेकालेणवादयः एषांसंज्ञालिट् द्विश्चउक्तार्थेणवादियोगे धातोर्द्विवचनंसस्वरादिर्द्विरुक्तिः अनेकस्वरस्य धातोः
सस्वराद्योवयवोऽद्विरुक्तोद्विर्भवति णादिः कित् अपित् णादिः कित् आभ्वोणादौ पूर्वस्याकारस्यभूशब्दस्य चाकारोणादौ परे ह्रस्वः पूर्वसंबंधि
नोदीर्घस्यह्रस्वरूपानांजवचपाः पूर्वस्य रूपानांजवाश्चपाः स्युः ऋडधघभानांजडदगवाः स्वक्तछठथानांचटत पाः स्युः। भुवोवुक्भवोवुगा
गमोणादौस्वरे वभूव वभूवतुः वभूवुः। क्रादेर्णादेः क्रसृभृवृद्रुस्तुश्रुस्नुद्वृत्तेभ्यः परस्यवसादेर्णादेरिङ् नभवति अन्यस्मात् भवतीतिनि
यमादिट् स्यात् वभूविथवभूवथुः वभूववभूववभूविववभूविमव लिवेलवानवभूव आशिषियात् यास्तां यासुस् यास् यास्तं यास्त
यासं यास्व यास्म सीष्टसीयास्तासीरन् सीष्टास सीयास्थांसीध्वसीयसीवहिसीमहि धातोराशिषियादादयः एषांसंज्ञालिङ् आशीर्यादा
दिः पकित् भूयात् भूयास्तं भूयासुः भूयाः भूयास्तं भूयास्त भूयासं भूयास्व भूयास्म सश्रीमान् भूयात् धस्तनेताताराँतारस् तासितास्थ स्ता
स्यतास्मितास्वस्तास्मस् ताताराँतारस्तासेतासाथेताध्वेताहेतास्वहेतास्महे श्वोभाविन्यर्थेतादयः एषांसंज्ञालुट्। सिसतासीस्य पामिट्
भविताभवितारौभवितारः भवितासिभवितास्थः भवितास्थ भवितास्मि भवितास्वः भवितास्मः श्वोभवितारांज्यभारःकुमारस्यत्यादौ भविष्य
तिस्यप् धातोर्भविष्यति कालेस्यपूर्वस्त्यादयोभवतिनिवाद्यष्टादशसुपरतः एषांसंज्ञालृट् भविष्यतिभविष्यतः भविष्यंतिभविष्यसिभविष्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सि॰ चं॰
उ॰
२

ष्यः भविष्यथ भविष्यामि भविष्यावः भविष्यामः कल्की धर्मपालको भविष्यति स्य क्रियातिक्रमे क्रियाया अतिक्रमे कृते श्चिदनिष्य
तौ सत्यां स्यप्रत्ययो भवति दिबादिपरतः एषां संज्ञा तद्रु यदि सुवृष्टिः स्यात् राज्यं चाभविष्यत् तदा सुभिक्षमभविष्यत् अभविष्यतां अभवि
ष्यन् अभविष्यः अभविष्यतं अभविष्यत अभविष्यं अभविष्याव अभविष्याम भूते सिः धातोर्भूतमात्रे काले सिः प्रत्ययो भवति दिवादिप
रतः एषां संज्ञा लुङ् दादेः पेपेपरे अपि हाधास्थादिण् भूपिबतिभ्यः परस्य सेर्लोपः शाच्छासाधाभूदाबाभुवः सिलोपे अयुङ् लुकि गुणो न
अभूत् अभूतां अभुवः सिलोपे स्वरे वुक् अभूवन् अभूः। अभूतं अभूत अभूवं अभूव अभूम माङि सिः स्वस्य सहिते दिवादिर्वा मेरः माङ् योगे
अटो लोपः मा भवान् भूत् मास्म भूत् ——— मास्म भवत् भू प्राप्तावात्मने भवते आराथई अतः परस्यात आथश्चात ई भवति भवेते
भवन्ते भवसे भवेथे भवध्वे भवे भवावहे भवामहे भवेत भवेयातां भवेरन् भवेथाः भवेयाथां भवेध्वं भवेय भवेवहि भवेमहि भवतां भवेतां
भवन्तां भवस्व भवेथां भवध्वं भवै भवावहै भवामहै अभवत अभवेतां अभवन्त अभवथाः अभवेथां अभवध्वं अभवे अभवावहि अभ
वामहि बभूवे बभूवाते बभूविरे बभूविषे बभूवाथे नाम्निनो ऽ चतुर्णां धातोः नाम्यन्ताद्धातोः परस्य सीध्वं लुङ् लिटां धस्य ढः स्यादो हलाद्वा ब
भूविढ्वे बभूविध्वे बभूवे बभूविवहे बभूविमहे भविषीष्ट भविषीयास्तां भविषीरन् भविषीष्ठाः भविषीयास्थां भविषीढ्वं भविषीध्वं भविषी
य भविषीवहि भविषीमहि भविता भवितारौ भवितारः भवितासे भवितासाथे भविताध्वे भविताहे भवितास्वहे भवितास्महे भविष्यते भवि
ष्येते भविष्यन्ते भविष्यसे भविष्येथे भविष्यध्वे भविष्ये भविष्यावहे भविष्यामहे अभविष्यत अभविष्येतां अभविष्यन्त अभविष्यथाः अभ
विष्येथां अभविष्य अभविष्ये अभविष्यावहि अभविष्यामहि अभविष्ट अभविषातां आतो नो ऽदन्तः आतो अन्ताः इत्यत्यकाराद्गुनरस्यत
अभविषत अभविष्ठाः अभविषाथां ध्वे सेर्लोपः अभविढ्वं अभविध्वं अभविषि अभविष्वहि अभविष्महि चितौ संज्ञाने ऽपध्यायाः लघोः धातो

राम
२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपधायाल घोर्नोमिनोगुणः चेत्तति ५ पूर्वस्य हस्वादिः शेषः पूर्वस्यादिर्हसः शिष्यंते अन्ये हसो लुप्यंते चिचेत्त चिचेतिथ शेः सिशब्दात्परः
योहिप सिपोरिट् इट् ईट् इट्टः परस्य सेर्लोपः ईटि अचेतीत् अचेतिष्टां स्यादिरः सेराणो विरश्यपुरस्यानडस् भवति अचेतिषुः च्युतिर् आसेच
नेच्योतति च्योतेत् च्योततु च्योतताद् अच्योतत् चुच्योत चुस्यात् च्योतिता च्योतिष्यति अच्योतिष्यत् इरितो वाङ् इतो धातोर्वाङ्·मत्य
योभवति पुसेरपवादः अचुच्युतत् अच्योतीत् श्च्युतिर् क्षरणे श्च्योतति श्च्योतेत् श्च्योततु श्च्योतताद् अश्च्योतत् न शसारस्वपाः पूर्वस्य शसात्पराः
स्वपाः शिष्यंते न शसाः चुश्च्योत चुश्च्युस्यात् श्च्योतिता श्च्योतिष्यति अश्च्योतिष्यत् अश्च्युतत् अश्च्योतीत् पकाररहितोप्ययम् श्च्योतति श्च्योतेत् श्च्यो
ततु श्च्योतताद् अश्च्योतत् चुश्च्योत चुश्च्युस्यात् श्च्योतिता श्च्योतिष्यति अश्च्योतिष्यत् अश्च्युतत् अश्च्योतीत् मंथ विलोडने मंथति मंथेत् मंथतु मंथताद्
अमंथत् नोलोप इति नलोपप्राप्ते असंयोगाण्णादिः कित् ममंथ ममंथतुः नोलोपः धातोर्हसांतस्योपधाभूतस्य नकारस्य लोपः ङिति परे पूज्रा
थीचतेने निरुपपदात् क्रुंचेः क्विपि न मथ्यात् मंथिता मंथिष्यति अमंथिष्यत् अमंथीत्। कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः इदितोत्र
म् इदितो धातोर्नुम् कुंथति कुंथेत् कुंथतु कुंथताद्वा अकुंथताद्वा अकुंथत् कुहोश्चुः पूर्वस्य कवर्गहकारयोश्चुत्वं भवति हसवर्गचतुर्थः उ
कुंथइ इदितो नलोपो न कुंथ्यात् कुंथिता कुंथिष्यति अकुंथिष्यत् अकुंथीत् चुविषक्ससंयोगेत्तुवति षिध गत्याम् आदेः ष्णः स्नः धात्वादेः षका
रणकारयोः सकारनकारौ भवतः सेधति सेधेत् सेधतु सेधताद्वा असेधत् सिषेध सिषिध्यात् सेधिता मादेश्च न तथा तौ सुनमाम् पादेः परेषां स्वा
दीनां नमादीनां च धातूनां सकारनकारयोः षकारणकारौ भवतः षत्वणत्वनिमित्ते सति निषेधति अङ्व्यवधानेऽपि षः न्यषेधत् नि
विषेधसेधतेर्गतौ न षः गङ्गां विसेधति षिधू शास्त्रे मांगल्ये च ऊदितो वा ऊदितो धातोस्थव सादेर्न पिट्। स्वरति सूति सूयति धूञ्रधनुयाद्
परपदुहमहस्नुहस्निहां च स्वरति सूति सूयति धूञ् ऊदित् सादेर्णादेर् नित्यमिट् स्यात् सेधति सेधेत् सेधतु सेधताद्वा असेधत् सिषेध सिषिधि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

थतथोऽधेः झभांताद्धातो स्तकारथकारयोर्धकारो भवति दधाते त्तेन भेजवा: सिषेद्दु सेधिता सेद्धा सेधिष्यति सेत्स्यति असेधिष्यत् असेत्स्यत् असेधीत् अनिटोऽनामिवतः अनिटो नामिवतश्च धातोर्वृद्धिः स्यात्से परे सौ असैत्सीत् झसात् झसाद्युत्तरस्य सेर्लोपो झसे असैद्धां असैत्सुः असैत्स असैत्सम् खद स्थैर्ये हिंसायां च खदति खदेत् खदतु खदतात् अखदत् अतउपधायाः धातोरुपधाया अतो वृद्धिः ञ्णिति चखाद णबुत्तमो वा णित् चखाद चखद णिट् से णित् अखदीत् अतो हसादेर्लघोर्वा वृद्धिः सेटि सौ अखदीत् अखादीत् व्यक्ताकोशे परस्फुटवर्णो गद व्यक्तायां वाचि प्रादिस्थान्निमित्तान्नेर्नस्य णो गदनदपतपत अपि ह्यधास्यामाङ्मेङ्स्यति हंति याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धि षु ञ्च न्यत्राकखादावषांते आद्योच्चारणे वा अकखादौ किम् प्रनिकरोति प्रनिकखति अखाते किम् प्रनिदुष्यति वेति किम् प्रणिभवति प्रनिभवति। आद्योच्चारणे किम् प्रणिचखाद प्रनिचकार प्रणिगदति अगादीत् रद विलेखने रदति रदेत् रदतु अरदत् रराद लोपः पचां किल्ये चास्य पचादीनां तिलिट्यदेशादीनां पूर्वस्य लोपो भवत्यकारस्य एकहलमध्यस्थस्य चैकारः किति णादौ सेटि थपि च रेदतुः रेदिथ णद अव्यक्ते शब्दे प्रणिनदति नदेत् नदतु अनदत् ननाद नेदतुः नेदिथ अर्द गतौ याचने च आभ्वोणादौ नुगर्थी अभ्वोत्तं अकारादेः संयोगान्ताकारादेश्च पूर्वस्य नुग्भवति णादौ आनर्द आर्दीत् नर्द गर्द शब्दे नर्दति नर्देत् कर्द कुत्सित शब्दे कर्दति खर्द दंदशूके खर्दति १ त्र्यदि चेष्टायां क्लिदि परिदेवने क्लिन्दति अतसातत्य गमने अतति शव्वाहु भक्षणे अखादीत् इदितो नुम् धातोः इदितो धातोर्नुम् स्यात् अदि बन्धने अन्तति अन्तेत् अन्ततु आनत् आनंत आनन्द अंद्यात् अंदिता अंदिष्यति आन्दिष्यत् आंदीत् इण दिस इकारादि आह्वाने रोदने अति अदि बन्धने अन्तति अन्तेत् अन्ततु आनत् आनंत आनन्द अंद्यात् अंदिता अंदिष्यति आन्दिष्यत् आंदीत्
स्पृहीननन्द चदि आल्हादने दीप्तौ च इदितो नुम् चन्दति चंदेत् चंदतु अचन्दत् चचंद चंद्यात् चंदिता चंदिष्यति अचंदिष्यत् अचंदीत् शुन्ध शुद्धौ शुंधति शुंधेत् शुंधतु अशुंधत् शुशुंध शुध्यात् शुधिता शुधिष्यति अशुंधिष्यत् अशुंधीत् तक कक कह हसने तकति कक कखु जीवने तंकति तंकेत् अतंकीत् शुक गतौ शोकति अशोकीत् बुक्क भषणे बुक्कति कष हसने कषति युगि जुगि वर्जने युंगति इदित्परस्मैपद्येइदिति स्वरादे



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धोतोर्द्वितीयोऽडागमो भवति दिवादौ परे अट् एस ऐऐऐन्दत् कासादिप्रत्ययादाम् कस् भूपरः कास् आस आसद पग्रुरु नाम्याचनेकस्व
रेभ्यो णवादौ परे आम प्रत्ययो भवति स चक्र असु भूपरः प्रयोक्तव्यः। विद इ द्रि जागृ उषां वाः पूर्वस्य ऋवर्णस्याकारः धातोर्नामिनः नाम्य
तस्यादंतस्य च धातोर्वृद्धिः ञ्णिति परे इंदांचकार इंदांचक्रतुः इंदांचक्रुः इंदांचकर्थ इंदामास इंदामासतुः इंदामासुः इंदांबभूव इंधातेएन्दी
त् णिदि कुत्सायाम् इदितो नुम् प्रपूर्वः प्रणिन्दति प्रनिन्दति प्रनिन्दत प्रणिन्दतु प्राणिन्दत् निनिन्द निंद्यात् निंदिता निंदिष्यति अनिंदिष्यत्
अनिंदीत् दधि पालने दंद धडस्वगतौ अपूर्कतौ रिडप धाल योर्गुणः ओखति ओखेत् ओखतु औखत्। अस वर्णे स्वरे पूर्वस्य वर्णा वर्णयो रियुवौड
वोखऊखतुः ऊखुः उवो खिथ औखीत् तुंच अपनयने अंचु गति पूजनयोः अञ्चति अंचेत् अंचतु आंचत् आनंच अच्यात् पूजायां अच्या
त् अंचिता अंचिष्यति आंचिष्यत् आंचीत् आछि आयामे आंछति आंछेत् आंछतु आंछत् ञ्णादौ आछ हर्छा कौटिल्ये ह्वो विंहसे हूर्च्छति
हूर्च्छेत् हूर्च्छतु जुहूर्च्छ हूर्च्छ्यात् हूर्च्छिता हूर्च्छिष्यति अहूर्च्छिष्यत् अहूर्च्छीत् प्रच्छ प्रमादे पृच्छति वजगतौ शसदद वादिगुणभूताकारणामेत्व
पूर्वलोपौ ववाज ववजतुः अवाजीत् व्रजगतौ व्रजति व्रजेत् व्रजतु अव्रजत् वव्राज व्रज्यात् व्रजिता व्रजिष्यति अव्रजिष्यत् वदिव्रज्योः सोनिंत्स्य
द्धिः अव्राजीत् अजगतौ क्षेपणे च अजति अजेत् अजतु आजत् अजेरघत्रपीवीवसादौ वापि वायतु धातोः विकरणस्य नो र्धातो श्च वर्णो वर्ण यो
रियुवौ स्वरे अनेकस्वरस्यासंयोग पूर्वस्य तु य्वो रुवर्णो नयोर्दुन्वो रेवापि विव्यतुः स्वरान्तादत्वेतु श्वनादौ नित्यानिटः स्यपोवेट् विवयिथ विवेथ व्या
जिथ विव्यथुः विव्यिव आजिव आजिम वीयात् नेकस्वरादनुदात्तात् २ आद्योच्चारणेनुदात्तादेकस्वराद्धातोः परस्य वसादेरिण्न स्यात् अनिट्
स्वरांतो भवतीति दृश्यतामिमासु सेटः भवदंति नहिदः अदन्त मृदन्त मृताञ्ज्वर डृ शृञौ श्विडीडिवर्णेष्वयशीङ् श्रिञावपि १ गणस्थ भूदन्तस्व
ताश्च रुस्नुक्षौ स्तुवन्तयोर्णौ नित्यथा यु णु क्ष्णावः इति स्वरान्तानिपुणैः समञ्चितास्तनोहसान्तानपि सन्निबोधत २ शकिस्तु कान्ते षु निडकद

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सि·चं·
उ·
४

ष्यते यसिञ्ञस्मानेषु वसिः प्रस्तार यी रभिञ्ञभाने ष्वथ्यमेषु नेयभिस्ततस्तनी योल भिरेव नेतरे ३ यमिज्ञमानेष्वनिडेकदृष्यतेरमिर्दिवारा
वपिपक्व्यतेमनिः नमिश्चत्रुथोहनिरेवपंचमोगमिस्तुषुष्ठः प्रतिषधवा विनाम ४ रिहिर्दुहिमेहतिरोहनी वहिनेहिस्तुषष्ठो दहेतिस्तथालिहिः
दूमेनिटो ष्ठाविहस्तु क्तसंध्यायाणेषु हान्ताः प्रविभज्यकीर्तिताः ५ दिशिंहशिंदशिमथोमृशिंस्पृशिंरिशिंरुशिंक्रोशतिमष्टमं विशिम लिशिंचश्चा
न्तान निटः प्राणगाः पठन्ति पाठेषु दशैव नेतरान ६ कृषिस्तराधिस्तुधिवंधि साधय ७ क्रुधिक्षुधी शुध्यतिबुध्यतीव्यधिः इमेतु धान्ताः दशचा
निटोमतास्ततः परं सिध्यतिरेव नेतरे ७ शिषिपिषिंशुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यति दुष्यतिद्विषिम् इमान दशैवापदिशन्त्यनिड्विधो
गणेषु षांतान् कृषकर्षतीतथा ८ तपन्तिपिंचापिमथावपिंस्वपिं लिपिंलुपिंतृप्यतिदृप्यतीसृपिम स्वरेण नीचेन शपिंछुपिंक्षिपिंप्रतीहि पान्ता
न गणितांस्तथोरश ९ अदिंहदिंस्कंदिभिदिच्छिदिंक्षुदीन शदिंसदिंस्विद्यतिपद्यती खिदिम तुदिंनुदिंविद्यतिविन्तइत्यपिप्रतीहि दान्ता
न दशापंचचानिटः १० पचिंमुचिंरिचिंवचिंविचिंसिचिं प्रच्छती निजिंसिचिं विमुचिं मजिं भजिं भञ्जिं भुजिं भ्रस्जिं त्यजिं यजिं युजिं रुजिं रञ्जिं सञ्जिं भुज्जतीन भुजिंस्व
जिस्त्रजिविजिविज्ञानिटः स्वरान् ११ वेत्ता अवैषीत् स्निस्यपे विस्मिथ विश्लथ अनपि यकारपरे पूर्वस्वरस्य दीर्घः स्यात् क्षीयात् अक्षैषीत् तुम्यहिं
सायाम मातुष्यते स्तुर गविकर्तौ मस्तुम्यति गौः अदृहि लभ्यत्वयाने पिस्तुर मास्तुम्यत मनुस्तुम्य ओणृ अपनयने ओणांचकार वन षन संभक्तौ
ववनतुः अवनीत अवानीत सेनतुः जनसन खनामात्मनि रिसेङ्क्तिमसेहचक्रो पारादाङ्क्ति वासायात् सन्यात् असनीत् असानीत् च
मु अदने ष्ठिवु क्लमु आचमां दीर्घो पि आचामति अङ्किम चमति विचम तिचेमतुः अचमीत। ष्ठिवु निरसनेन नाम धातुष्क ष्ठिवांसत्वन ष्ठो वति ष्ठि
वेः पूर्वस्य ठस्य थो वा तिष्ठेव ठिष्ठेवयोर्विहसेष्ठीव्यात् अष्ठेवीत् कठेषर्षाः वरणयोः हृध्यत सणम्य सजाम्ये देतां सेटिसो नवृद्धिः अकटीत्
हयगतौ अयहीन ज्रहसिनां न्योर्वेः अन पिविषयेडवर्णस्य वलनत्र जूवतुः जज्ञुवियज्रजीम [illegible] अजौषीत गपूरक्षणे आयः गपृथु यविच्छिपणि

राम
४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पनिभ्यस्स्वार्थे आयः प्रत्ययः अनपि तु चास धातुः प्रकृतिप्रत्ययान्तः शब्दो धातुसंज्ञको भवति गोपायति गोपायांचकार जुगोप यतः पस्मात
श्यान पि लोपः गोपाय्यात् गुप्यात् गोपायिता गोपिता गोप्ता अगोपायीत् अगौप्सीत् अगोपीत् मसात अगोप्साम् एवं धूप संतापने पसन्तापने पिच्छतन
पृथ्य अतापीत् जप जल्प व्यक्तायां वाचि जेपि थ जपिता अजापीत् क्रमु पादविक्षेपे भ्राश भ्लाश भ्रमु क्रमु क्लमु त्रसि त्रुटि लषां यो वा कर्त्र्यर्थे
शु च त्रुष क्रमः परस्मैपदे परे दीर्घो पि विषये क्राम्यति क्रामति अक्रमीत् यम उपसर्गमाच्छः गमयम इषु घूर्णाच्छः स्यात् विषये यच्छति येमि यथ यथ यमि
रमिन मातासक्त से इट् ये अयंसीत् अयं सिघ्राण मप्रवृत्ते शब्दे च नेमिथ न नंश अनंसीत् ईर्ष्य ईर्ष्ये ईर्ष्या यां ईर्ष्येति ऐर्ष्यीत् ऐर्ष्यीत् गम्लृ ग
तौ गच्छति गमी स्वरे गम हन जन खन घसां उपधाया लोपः स्यात् स्वरे ङ्कि तिनत्रु ङ जग्मतुः जगमिथ जगंथ हन्तः स्पः हेतः कृदंता च परस्मैप
दइडू भवति गमेस्तु पे गमिष्यति लिङ्लुषा रेडः लितो धातोः पुषादेश्च ङः प्रत्ययः स्यात् पेसेरपवादः अगमत् म्लुचु ग्लुचु गतौ म्लोचति म्लु चादे
वोङः अम्लुचत् अम्लोचीत् अम्लोचीत् अम्लुचत् ग्रुचु ग्लुचु च चौर्ये अग्रुचत् अग्रोचीत् अग्लुचत् अग्लोचीत् ग्लुंचु गतौ अग्लुचत् अग्लुंची
त् ञिफला विशरणे तृफल भज त्रयां क्ङिति णादौ से टि य पि चेत्व पूर्वलोपौ फेलतुः फेलिथ फलांत स्थल समीपाकारस्य सो नित्यं वृद्धिः अफा
लीत् फल निष्पत्तौ फेलतुः अफालीत् चर गति भक्षणयोः अचारीत् स्व शब्दोपतापयोः स्वरति सस्वार गुणोर्ति संयोगा द्योः सस्वरिथ सस्वर्थ सस्व
रिव स्वर्यात् स्वरिष्यति अस्वारीत् अस्वारिष्टां अस्वार्षीत् अस्वार्ष्टां अस्वार्षुः जिजये म परोक्षयां ज्ञेर्गिः जिगाय जिग्यतुः जिग्युः जिगयिथ जिगेथ
जीयात् अजैषीत् कृष विलेखने कर्षति चकर्ष चकर्षिथ रारोरुसेट् दृशा दृश सृज कृष मृश स्पृश तृप दृप सृप पाः मसे रोरो भवन परोक्ष कृषादीनां
वा कृषा वा कर्षोः षढोः कसे क्रक्ष्यति कर्क्ष्यति अक्राक्षीत् अकार्क्षीत् कृष मृष स्पृश मृश तृप दृप यां वा सिः दृशां नास्ति कहानात् क्षात् स्यात् नास्पृ
पधारनिटः सकप्रत्ययः स्यात् हिवादि परो नग्र दृशेः सेरपवादः अकृक्षत् सृप्लृ गतौ सर्पति सस्रप्स सर्पा अस्रपत् क्रुश आह्वाने रोदने च क्रोशति क्रोष्टा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सि॰ चं॰ उ॰ ५

अक्रुक्षत् रुष रिष शिष हिंसायां इ्रुसहत्तु भरिष रुषाम न पि तसे हारोषितारोष्टारोषितारेष्टा अशिक्षत् मिह सेचने ढिढो लोपो दीर्घश्च ढ्रे परे
ढ्रस्य लोपः स्याच्चानृतो दीर्घः मेढा षढोः कः से धातोः षढयोः कत्वं स्यात्से परे अमिक्षत् दह भस्मीकरणे दहि ग्रहदग्ध धक्ष्यति अधाक्षीत् नसात्
अदाग्धां इ्‌ विध्यासोः इन्वति इन्वांचकार ऐन्वीत् हिवि दिवि धिवि जिवि प्रीणने हिन्वति धिन्वि कृण्वो नस्य लोपो गुणाभावश्च प्रत्यय चास्य विषये
नूपः विकरणस्य तु प्रत्ययस्यो प्रत्ययस्य च गुणो भवति पिति परे धिनोति ओर्वां वा लोपः असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा वमयोः धि
न्वः धिनुवः धिन्मः धिनुमः मिपि तु गुणो बाधकः धिनोमि ओर्वा हेः असंयोगपूर्वात्प्रत्ययोकाराद्धेर्लोपो भवति धिनु धिनुतात् कृवि हिंसाकरणगति
कृणोति कृणवंति चकृण्व अक्षू व्याप्तौ अक्षीवा तु प्रत्यययोः विषये अक्ष्णोति अक्ष्णुवन्ति अक्षति आनक्षिथ आनष्ठ अक्षिता अष्टा अक्षिष्यति अ
क्ष्यति आक्षीत् आक्षिष्टाम् आक्षीत् आष्टाम् आक्षुः तक्षू त्वक्षू तनूकरणे तक्ष्णोति तक्षति तनूकरणे तु वा ऽक्षिषयेत् तक्ष्णोति तक्षति वाकाष्ठान् ततक्षिथ तत
तष्ठ अतक्षीत् अतक्षिष्टाम् अताक्षीत् अताष्टाम् तनूकरणे किम् वाग्भि सन्तक्षति भर्त्सयतीत्यर्थः णिक्ष चुम्बने प्रणिक्षति निक्षति ग्लैम्लै ह
र्षक्षये संध्यक्षराणामात्वं न पि आतो णङौ आदन्ताद्धातोः परो णङ् जग्लौ आतो ऽनुपि धातोरातो लोपोऽनपि किति स्वरे इटि च जग्लतुः जग्लिथ ज
ग्लाथ संयोगादेरातः तस्य किति लिङि वा एकारो वा ग्लायात् ग्लेयात् अग्लासीत् कै गै रै शब्दे जगौ दादरे अपि दाधामागेहाक् पिवति सास्थामानेका
रो भवत्याशीर्लिङि दाद्येषेत्याव्यात् अगासीत् स्त्यै ष्ट्यै शब्दसंघातयोः स्त्यायति तस्त्यौ स्त्यायात् स्त्येयात् अस्त्यासीत् दैप् शोधने ददौ दायात् अदासीत्
धेट् पाने दधौ धेयात् अधासीत् सिलोपश्च अधात् अधाताम् उस्यालोपः अधुः धेटो भूतमात्रे द्विवादि परोङ्वा वादित्वं च धातोः नपि अदधत् द
श्रि श्रै प्रेक्षणे दृशादेः पश्यादिः चतुर्थेपि दृशञ्च सृ सद शद पा घ्रा ध्मा म्ना दाण स्थापश्यऋच्छ धौ शीय सीद पिब जिघ्र धम मन यच्छ तिष्ठाः पश्यति दद
र्श दद्रशतुः सृजि दृशोः स्य पो वेट् ददर्शिथ दद्रष्ठ द्रष्टा अद्राक्षीत् अद्राष्टाम् ऋवर्णदृशोङि गुणः अदर्शत् ऋगतौ ऋच्छति आर्च्छत् गुणो ऽर्त्तिसंयो

एम ५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गाद्योः अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यक्ति यङि किति णादौ वा शीर्यादौ च आरतुः आरुः अर्तिअयतीनां थपो नित्यमिट् आरिथ अ
र्यात् अर्ता अरिष्यति आरिष्यत् सर्तिशास्त्यर्तिभ्यो ङ्लुङि सेरपवादः स्वरादेः आरत् आरताम् अनेन्व्हादेरिति केचित् आर्षीत् आर्ष्टाम् सृ ग
तौ धावति अधावत् शीघ्रगतौ वेचायम् अन्यत्र सरति ससार सस्रतुः ससर्थ सस्रिव सस्रिम पादादौ येयादौ धातोः ऋतो रिङ् भवति ङोञ्च
धानार्थस्तेन ये इति न दीर्घः स्रियात् सर्ता सरिष्यति असरत् असरताम् स्रु गतौ स्रवति असुस्रवत् सुस्राव सुस्रुवतुः सुस्रोथ सुस्रूयात् स्रोता श्रि स्रु
दुभ्यो ङो धातोश्च द्वित्वं लुङि सेरपवादः असुस्रुवत् दुद्रु गतौ द्रु विथ दु दोथ दोता अदोषीत् द्रवति दुद्रोथ दुद्रुव अदुद्रुवत् श्रु श्रवणे शृणुवः शृ
ञ्चादेशोऽनुप्रत्ययश्च एवं विषये नूपः शृणोति शृणोमि ओ ओ वो लोपः शृणुवः शृण्वः शृणुमः शृण्मः शृणुयात् शुश्राव श्रूयात् अश्रौषीत् शद्लृ शा
तने शीयादेशः आत शीयते अशीयत् शशाद शेदिथ शशाथ शत्स्यति शत्ता अशदत् षद्लृ विशरणगत्यवसादनेषु सीदति सदि स्वञ्जो लिटि परस्मैनषः
नि षसाद सत्ता सत्स्यति असदत् पा पाने पिबति पपौ पेयात् पाता पास्यति दादेः पेश्च पात् घ्रा गन्धोपादाने जिघ्रति जघ्रौ घ्रेयात् घ्रायात् घ्रास्य
ति अघ्रासीत् ध्मा शब्दाग्निसंयोगयोः धमति दध्मौ ध्मेयात् ध्मायात् अध्मासीत् ष्ठा गतिनिवृत्तौ तिष्ठति तस्थौ दादेः स्थेयात् स्ना अध्यासेम
न तिम्नौ म्नायात् म्नेयात् अम्नासीत् दाण् दाने यच्छति ददौ देयात् अदात् ह्वृ कौटिल्ये ह्वरति जह्वार गुणोऽर्ति संयोगाद्योः जह्वरतुः ऋदन्ता
त्यपो नेट् जह्वर्थ ह्वर्यात् ह्वर्ता ह्वरिष्यति अह्वरिष्यत् अह्वार्षीत् स्वृ शब्दोपतापयोः स्वरति सस्वार यस स्वर्थ सस्वरिव स्वरिता स्वर्ता स्वरिष्य
ति अस्वरिष्यत् अस्वारीत् अस्वरीत् अस्वारिष्टाम् अस्वार्षुः बुध अवगमने बोधति बोधिता रुह बीजजन्मनि प्रादुर्भावे च रोक्ष्यति अरुक्षत् स्कं
दिर्गतिशोषणयोः स्कन्दति चस्कन्दिथ चस्कन्द स्कन्द्यात् स्कन्ता स्कन्त्स्यति अस्कान्त्सीत् अस्कदत् यभ मैथुने यभति ययाभ येभतुः येभुः येभि
थ ययब्ध यभ्यात् यब्धा अयाप्सीत् अयाब्धाम् अयाप्सुः तॄ प्लवनतरणयोः तरति ततार तेरतुः तेरिथ ऋत इद्धातोः ऋकारस्य इर् भवत्यगुणवृद्धिवि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सि॰ चं॰ ॥

कृङ् चञ् ऋदन्तानां वा तरिता तरीता पसेरिटो न दीर्घः स्तीर्यादेः अनारीत् अनारिष्टा
षयेती र्य्यात् ईटो ग्रहाम् ग्रहादीनामिट ईकारो न तृणादेः स्तूङ् चञ् ऋदन्तानां वा तरिता तरीता पसेरिटो न दीर्घः स्तीर्यादेः अनारीत् अनारिष्टा
षयेतीर्य्यात् ईटो ग्रहाम् ग्रहादीनामिट ईकारो न तृणादेः अङ्ग क्षीत् गंज संगे स संजिथ ससङ्क्थ व्यषाङ्क्षीत् कि
म् अनारिषुः दंश दशने अपि रंज दंश सञ्ज स्वञ्जाम् एषां नस्य लोपः पिदंशति दंष्टा अदाङ्क्षीत् गंज संगे स संजिथ ससङ्क्थ व्यषाङ्क्षीत् कि
म् अनारिषुः दंश दशने अपि रंज दंश संज स्वंजाम् एषां नस्य लोपः पिदंशति दंष्टा अदाङ्क्षीत् चिकित्सति चिकित्सां चकार चिकित्सि
त रोगापनयने संशये च गुप्भ्यः गुप्तिज् कित् मानुबधदान् शान्भ्यः स्वार्थे सन् स्यात् भवति धातोर्द्वित्वम् चिकित्सति चिकित्सां चकार चिकित्सि
ता अचिकित्सीत् पत्लृ पतने पपात पेततुः पतेङ् पुम् अपप्तत् । भ्रमु चलने यो वा भ्रम्यति भ्रमति फण राजृ भ्राजृ भ्राशृ भ्लाशृ स्यमु स्वन ध्वन भ्रमु
ता अचिकित्सीत् पत्लृ पतने पपात पेततुः पतेङ् पुम् अपप्तत् । भ्रमु चलने यो वा भ्राम्यति भ्रमति फण राजृ भ्राजृ भ्राशृ भ्लाशृ स्यमु स्वन ध्वन भ्रमु
ता अचिकित्सीत् पत्लृ पतने पपात पेततुः वमतुः अवमीत् फण गतौ फेणतुः पफणतुः अ
त्रसाम् एत्वपूर्वलोपौ वा भ्रेमतुः बभ्रमतुः अभ्रमीत् टुवमु उद्गिरणे वम एत्वपूर्वलोपौ वा वेमतुः ववमतुः अवमीत् फण गतौ फेणतुः पफणतुः अ
त्रसाम् एत्वपूर्वलोपौ वा भ्रेमतुः बभ्रमतुः अभ्रमीत् टुवम उद्गिरणे वम एत्वपूर्वलोपौ वा वेमतुः ववमतुः अवमीत् फण गतौ फेणतुः पफणतुः अ
फाणीत् अफणीत् स्वन स्यमु शब्दे स्वेनतुः सस्वनतुः अस्वानीत् अस्वनीत् स्येमतुः सस्यमतुः अस्यमीत् शसु हिंसायाम् शशसतुः शशसिथ
फाणीत् अफणीत् स्वन स्यमु शब्दे स्वेनतुः सस्वनतुः अस्वानीत् अस्वनीत् स्येमतुः सस्यमतुः अस्यमीत् शसु हिंसायाम् शशसतुः शशसिथ
तुहिर् दुहिर् उहिर् अर्दने अतुहत् अतोहीत् दोहिता अदुहत् अदोहीत् उवोह ऊहतुः वस निवासे णवादौ पूर्वस्य यजादीनां ग्रहादीनां च पूर्वस्य
तुहिर् दुहिर् उहिर् अर्दने अतुहत् अतोहीत् दोहिता अदुहत् अदोहीत् उवोह ऊहतुः वस निवासे यजादीनां यवराणां स्यात् संप्रसारणं कितियजादीनां से
सम्प्रसारणं णवादौ यवराणामिदुद्घतः सस्वरस्य सम्प्रसारणं दीर्घस्य दीर्घो हस्वस्य ह्रस्वः उवास यजादयः २ घसादेभ्यः घसिशासिवसीनां सस्य षो निमि
प्रसारणं कितियजिवपिवहि श्वेववेञ् व्येञ् ह्वेञ् ऋत्यन्तिस्वपीव दिवसी श्वयतिवेक्ति रेकादश यजादयः १ घसादेभ्यः घसिशासिवसीनां सस्य षो निमि
त्तेसति ऊषतुः उवसिथ उवस्थ उष्यात् वस्तास्तो ऽनपि सस्यतो ऽनपि सेवत्स्यति अवात्सीत् अवाताम् वद व्यक्तायां वाचि वदति उवदिथ उद्या
त् वदिव्रज्योः सो नित्यम् वृद्धिः अवादीत् टुओश्वि गतिवृद्ध्योः श्वयतेर्णादौ सम्प्रसारणं वा नतो द्वित्वम् । शुशाव शुशुवतुः शुशविथ शिश्वा
य शिश्वियतुः शिश्वयिथ शूयात् श्वयिता अश्वयीत् श्वयतेरितो लोपोऽङि अश्वत् श्वयतेर्ङे द्वित्वं वा रो लोपः अशिश्वियत् घस्लृ अदने घसति
घसेत् जघास जक्षतुः जघसिथ जघस्य घस्ता घत्स्यति अघत्स्यत् इति पंप्रक्रिया । एध वृद्धौ एधते एधांचक्रे आमो भ्वसोः नात्कर्तरि एधामास
एधाम्बभूव एधिषीष्ट ईषु दर्शनांकनयोः ईक्षांचक्रे ऐक्षिष्ट घष्क गतौ घष्कते घष्किषीष्ट अघष्किष्ट वेष्ट वेष्टने विवेष्टे चेष्ट चेष्टायाम् चिचेष्टे

राम ३६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चेष्टिष्वजे गतौ स्थैर्ये च स्वजते आनृजे आजिष्ट ष्वंज परिष्वंगे स्वजते: स्वजते णौ देर्वा कित्वम् सहिस्वंज्योर्लिटि परस्य नषः परिषस्वंजे परिष
स्वजे स्वङ्क्षीष्ट स्वङ्क्ता स्वङ्क्ष्यत अस्वङ्क्त अस्वङ्क्षाताम् परिष्वङ्क्त परिष्वङ्क्त त्रपूष लज्जायाम् त्रपते त्रेपे ऊदितो वा त्रपिषीष्ट त्र
प्सीष्ट अत्रपिष्ट अत्रप्त तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः तेपते तितिपे तेप्ता तिप्सीष्ट अतिप्त ष्टेपते तिष्टिपे स्तेपिषीष्ट
ष्टेप्स्त पतेतिष्टेपे स्तेपिषीष्ट जभी जृभि गात्रविनामे रधिजभोः स्वरे नुम् जंभते अजंभिष्ट जृंभते जजृंभे जृंभ स्तंभे विष्टंभने ष्टुभु स्तोभिता स्तो
भिष्ट क्षमूष सहने क्षमते चक्षमे चक्षमिषे चक्षंसे। म्वोश्च धातोः मान्तस्य धातोर्मकारस्य नः स्यात् झसे पदान्ते च वम योश्च चक्षमिवहे चक्षमिमहे च
क्षण्वहे चक्षण्महे अक्षमिष्ट अक्षंस्त क्नूयी शब्दे उन्दे च क्नूयते अक्नूयिष्ट क्ष्मायी विधूनने क्ष्मायते चक्ष्माये अक्ष्मायिष्ट स्फायी ओप्यायी वृद्धौ
स्फायते पस्फाये अस्फायिष्ट प्यायते लिड्यङोः प्यायः पी पिप्ये दीपजनबुधपूरितायिप्यायिभ्यो वा इण् तनि कर्त्तरि सेरपवादः लुकु इणः पर
स्यतनो लुक् अप्यायि अप्यायिष्ट तायृ सन्तानपालनयोः तताये अतायि अतायिष्ट वल वल्ल संवरणे वलते वल्लते टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ भ्रेजे
वभ्राजे भ्राश्यते भ्राशते भ्राशे वभ्राशे भ्लाश्यते भ्लाशते भ्लेशे वभ्लाशे तिज निशाने क्षमायां च गुप्तिज्भ्यः तितिक्षते तितिक्षां चक्रे गुप गोपनकुत्सन
योः उग्रस्यते मान विचारणे यः से पूर्वस्यात इत् समानादीनां पूर्वस्य ज्ञोदीर्घः मीमांसते बध निद्रायाम् आदिज वामिति बीभत्सते। पण व्यवहारे
स्तुतौ च पन च पणायति स्तुतावेवायः पणते पणायाचक्रे पेणे एवम्पनु कम्प्रकान्तौ कमेः स्वार्थे णिङ् न वृद्धिर्वा कामयते कामयाञ्चक्रे चकमे
रङ् हिक्ष्मन्ताद्धातोः कर्त्तरि अङ् लुङि सेरपवादः धातोश्च द्वित्वम् णेः अनुपिते लोपो न त्विडामन्ताल्वाय्येत्विष्णुषु अङि लघोः ह्रस्व उप
धायाः अङि सन्नुपधाया ह्रस्वो भवति पूर्वस्यानालघुनि धात्वक्षरे इकारः लघोर्दीर्घः अङि सति पूर्वस्य लघोर्दीर्घो भवति लघुनि धात्वक्षरे
अचीकमत णेरभावे कमेरङ् द्वित्वे अचकमत् अय गतौ अयते: अयन्तो माहेरे फस्य लत्वम् ... अयांचक्रे आपिष्ट दय दानगति हिंसा दानेषु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सि॰ चं॰ ७

दयते दयांचक्रे घट चेष्टायाम् घटते जघटे अघटिष्ट ईह चेष्टायाम् ईहांचक्रे ऊह वितर्के ऊहांचक्रे कासृ शब्दकुत्सायाम् कासांचक्रे षेवृ
सेवने सिषेवे असेविष्ट मुङ् प्लुङ् च्युङ् गतौ अमोष्ट अप्लोष्ट अच्योष्ट गाङ् गतौ गाते अन्तरङ्गत्वात्सवर्णदीर्घे सति गाते गाते गे गावहे गा
महे जगे अगास्त रूङ् गतौ भाषणे च रवते रुरुवे अरविष्ट अनिड् यमित्येके मूङ् बन्धने मविता अमविष्ट पूङ् पवने अपविष्ट देङ् त्रैङ् पा
लने दयते देङो णलादौ दिग्यादेशो द्वित्वाभावश्च दिग्ये दासीष्ट अदित स्थाध्वोरित्सिङि त्वे मा तिनत्तु दीङ् लोपो ह्रस्वात् ह्रसह्रस्वात्परस्य से
लोपो झसे । अदितः अदिषातास् त्रायते तत्र अत्रास्त षिङ् ईषद्धसने स्मयते सिष्मिये स्मेषीष्ट स्मानांक्षसेष्ट डीङ् विहायसागतौ डयते डिड्ये
अडयिष्ट द्युत दीप्तौ द्योतते द्युतेः पूर्वस्य सम्प्रसारणं स्वापस्तसेदिद्युते द्युतादिभ्यो लुङि वा परस्मैपदं अद्युतत् अद्योतिष्ट श्विता वर्णे अश्वितत्
अश्वेतिष्ट ञिष्विदा स्नेहनमोचनयोः अष्विदत् अश्वेदिष्ट ञिक्ष्विदा च अक्ष्विदत् अक्ष्वेदिष्ट ञिमिदा स्नेहने अमिदत् अमेदिष्ट रुच दी
प्तावभिप्रीतौ च अरुचत् अरोचिष्ट घुट परिवर्तने अघुटत् अघोटिष्ट रुठ लुठ लुठ प्रतीघाते अरुठत् अरोठिष्ट अलुठत् अलोठिष्ट अलुठत्
अलोठिष्ट शुभ दीप्तौ अशुभत् अशोभिष्ट क्षुभ सञ्चलने अक्षुभत् अक्षोभिष्ट णभ तुभ हिंसायाम् नेभे अनभत् अनभिष्ट स्रंसु ध्वंसु भ्रंसु अवस्रं
सने अस्रसत् अस्रंसिष्ट ध्वंसु गतौ च अध्वसत् अध्वंसिष्ट स्रम्भु विश्वासे अस्रभत् अस्रम्भिष्ट वृतु वर्तने वर्तते वृत्तादिभ्यः स्यसनोः वा परस्मैपदं नि
त्यत्वं च वर्त्स्यति वर्तिष्यति अवृतत् अवर्तिष्ट वृधु वृद्धौ वर्त्स्यति वर्धिष्यते अवर्त्स्यत् अवर्धिष्यत अवृधत् अवर्धिष्ट शृधु शब्दकुत्सायाम् श
र्धते स्यन्दू प्रस्रवणे स्यन्दते स्यन्त्स्यति स्यन्दिष्यते स्यन्त्स्यते अस्यदत् अस्यन्दिष्ट अस्यन्त क्रपू सामर्थ्ये कृपो रो लः कृपो रेफस्य लः ऋकारस्य ल्ट
कारः कल्पते चक्लृपे कल्पिषीष्ट सिसोः उपधायाग्रणो न सिसोर निदो परतः क्लृप्सीष्ट कृपे स्तादोपस्थाय निष्ठत्वं च कल्प्ता आतिक सि
ताकल्प्ता कल्प्स्यति कल्पिष्यते कल्प्स्यते अक्लृपत् अकल्पिष्ट अक्लृप्त एते द्युतादयो वृतादयश्च व्यथ दुःखभयचलनयोः व्यथते व्यथे॥

राम ७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दौपूर्वेस्यपस्यई:विव्यश्रेअप्यशिष्ट।ज्युङ्गतौज्यवनेजुज्यवेअज्योष्टरमक्रीडायाम्रमनेऽमुङ्पर्युपेभ्योरमःपम्विरमतिआरमतिपरिरम।
तिरेमेअरंसीत्अरंस्तलोकृदर्शनेलुलोकेऽलोकृसंघातेअलोकिष्टशकिशंकायाम्शशंकेअशंकिष्टअकिलक्षणेआनकेढौकृत्रौकृप्रि
गतौडुढौकेतुत्रौकेअढौकिष्टलघिभोजननिवृत्तौललंघेअलंघिष्टबाधृविलोडनेबाधतेबबाधेअबाधिष्टनाथृनाधृयाचोपतापैश्वर्या
शीष्षुआशिष्येवनाथ:आत्मनेपदम्नाथतेअनन्वननाथतिनाधतेननाधेअनाधिष्टदधधारणेददधेअदधिष्टस्कुदिआप्लवनेचुस्कुन्दे
अस्कुन्दिष्टवदिअभिवादनस्तुत्योःवन्दतेववन्देअवन्दिष्टभदिकल्याणेसुखेचबभन्देमदिस्तुतिमोदमदस्वप्नकान्तिगतिषुममन्देतमम
न्देअमन्दिष्टस्पदिकिंचिच्चलनेपस्पन्देक्रुदहर्षेक्लुक्लुदेदददानेददेदे।यतीप्रयत्नेयेतेजित्वरासंभ्रमेत्वरतेतत्वरेअत्वरिष्टषहमर्षणे
सहतेसेहेसहितासोढाईषसहलुभरुषरिषामनपितस्सङ्कासहिवहोरोदवर्णस्यढलोपसतिअसोढअसहिष्टगाहूविलोडनेगाहतेजगाहिषे
जघाक्षेजगाहिढ्वेजगाढ्वेगाहिषीष्टघाक्षीष्टगाहितागाढागाहिष्यतेघाक्ष्यतेअगाहिष्टअगाढअघाक्षाताम्अघाढ्वम्ग्रहू
ग्रहणेजगृहिषेजघृक्षेजगृहिढ्वेजघृढ्वेगर्हिषीष्टघृक्षीष्टगर्ढागर्हिष्यतेघर्क्ष्यतेअगर्हिष्टअघृक्षत क्सानिकोलोपस्त्वरेऽ घृक्षाता
म्अघृक्षन्तअघृक्षध्वम्।इत्यात्मपदिनः पाराज्वदीप्तौरेजतुःरराजतुःरेजेरराजेअराजीत्अराजिष्टाम्अराजिष्टखनुखननेचखानच
खनतुःचखन्नखायात्खन्यात्अखानीत्अखनीत्अखनिष्ट।हृञ्हरणेजहारऋद्धत्वात्स्पोनेट्जहर्थजह्रिहिपात्उःऋवर्णस्य
सिसारनिदानग्रणःहृषीष्टअहार्षीत्अहृतदानआर्जवेदृग्भ्यःदीदांसतिदीदांसाचक्रेदीदांसाञ्चकारशानतेजनेशीशांसचक्रेगुहूसम्व
रणेगुहेरूपधायाऊत्त्वणहेतौस्वरेजुगूहतुःजगूहियजुगोढजुगुहिषजुघुक्षजुगुहिध्वेजुघूढ्वेगूहिषीष्टघुक्षीष्टगूहितागोढागूहि
ष्यतिघोक्ष्यतिदुहदिहलिहगुहूभ्यःसकोवास्वावकारतवर्गयोरातिअगूढअघुक्षत्अघुक्षताम्अघुक्षन्अगूढाःअघुक्षथाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अघुक्षाथाम् अगूढ्वम् अघुक्षध्वम् अघुक्षावहि अगुह्वहि अघुक्षामहि अगूह्महि अगूहिष्ट अघुक्षत अगूहीत् भज सेवायाम् भेजिथ बभक्थ
भेजे भक्षीष्ट अभाक्षीत् अभक्त श्रिञ् सेवायाम् शिश्रियाम् शिश्रियतुः श्रिये श्रीयात् श्रयिषीष्ट श्रयिता श्रयिता अशिश्रियत् अशिश्रियत त्वि
षदीप्तौ ति त्विषे त्विक्षीष्ट त्वेष्टा त्वेक्ष्यते अत्विक्षत । स्पश बाधनस्पर्शनयोः पस्पाश पस्पशे अस्पशीत् अस्पशिष्ट अस्पाशीत् लष कान्तौ लष्यति
लषति लष्यते लषते लेषलषिष्ट रञ्ज रागे रजिथ ररङ्क्थ ररञ्ज रज्यात् रङ्क्षीष्ट अराङ्क्षीत् अरङ्क्त भृञ् भरणे भरति बभर्थ बभृव बभृढ्वे
भर्ता धृञ् धारणे दधर्थ दध्रिध्वे दध्रिढ्वे अधार्षीत् अधृत णीञ् प्रापणे निनयिथ निनेथ निन्ये अनैषीत् अनेष्ट डुयाचृ याचायाम् याचति य
याचे अयाचीत् अयाचिष्ट यज देवपूजासंगतिकरणदानेषु इयजिथ इयष्ठ अयाक्षीत् अयष्ट अयड्ढ्वम् टुवप् बीजतन्तुसन्ताने उवपिथ उवप्थ उव
पथ ऊपे ऊप्यात् वप्सीष्ट अवाप्सीत् । अवाप्साम अवप्सत वह प्रापणे वहति उवहिथ उवोढ ऊहे उह्यात् वक्षीष्ट वोढा अवाक्षीत् अवोढाम् अ
वोढ अवक्षाताम् वेञ् तन्तुसन्ताने वेञो णलि न सम्प्रसारणम् ववौ ववे वेञो वा वयः णादौ उवाय ग्रहाकिति च ग्रहिज्यावयिव्यधिवष्टिवृश्चति
पृच्छति विचति भृज्जतीनां संप्रसारणं किति ङिति च वयो यस्य नेत्वम् ऊयतुः ऊयुः उवयिथ ऊये वयो यस्य किति लिटि वो वा ऊवतुः ऊवे ऊ
यात् वासीष्ट अवासीत् अवास्त व्येञ् संवरणे व्येञो लिटि नात्वम् विव्याय विव्ययिथ वीयात् व्यासीष्ट अव्यासीत् अव्यास्त ह्वेञ् स्पर्धायां श
ब्दे च ह्विकृत्स्य ह्वयति स्सम्प्रसारणम् जुहाव जुहुव जुहविथ जुहोथ जुहुवे हूयात् ह्वासीष्ट लिपिसिचिह्वः यतीनां ङोल्ङ् डिः वा आह्वत अ
ह्वास्त अह्वत डुपचष् पाके पचति पेचिथ पपक्थ पेचे अपाक्षीत् अपाक्ता म् अपाक्षुः षच समवाये सेचे असाचीत् असचिष्ट शप आक्रोशे
शेपिथ शशप्थ अशाप्सीत् अशप्त हिक्क अव्यक्ते शब्दे जिहिक्के अहिक्कीत् अंचु गतौ याचने च आनञ्चे आञ्चीत् रेटृ परिभाषणे रिरेटे अरेटीत् चते च
दे याचने चचेदे अचदीत् चेते अचतीत् अचेतिष्ट प्रोथृ पर्याप्तौ पुप्रोथ पुप्रोथे अप्रोथीत् अप्रोथिष्ट मिदृ मेधृ मेधाहिंसनयोः मिमिदे अमेदी



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त् अमेदिष्ट मिमेदे अमेदीत् अमेदिष्ट मेधृ संगमे च मिमेधे मेधिता णिदृ णेदृ कुत्सासन्निकर्षणयोः निनेदे नेदिता शृधु मृधु उन्दने शर्द्धति
शशर्द्ध शश्र्धतुः शश्र्धुः शर्द्धे मर्द्धति ममर्द्ध अमर्द्धीत् अमर्द्धिष्ट बुधिर् बोधने बोधति बोधते अबोधीत् अबुधत् अबोधिष्ट उबुन्दिर् निशा
मने बुन्दति बुबुन्दे अबुदत् अबुन्दीत् अबुन्दिष्ट वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु वेणति वेणते विवेण अवेणीत् अवेणिष्ट नालो
प्ययम् वेनति। चीवृ आदानसम्वरणयोः चीवति चिचीव चिचीवे अचीवीत् अचीविष्ट चायृ पूजानिशामनयोः चायति चचाय चचाये अचायीत् अ
चायिष्ट व्यय गतौ व्ययति विव्याय विव्यये अव्ययीत् अव्ययिष्ट दाशृ दाने दाशति ददाश ददाशे अदाशीत् अदाशिष्ट भ्रेषृ भ्लेषृ गतौ भ्रेश
ति भ्लेशति भ्रेष्ट भ्लेष्ट गतौ भये च भेषति विभेषे विभ्रेषे विभ्लेष अभेषीत् अभेषिष्ट असगतिदीप्त्यादानेषु असति आस आसे आसीत् आ
सिष्ट अयं षान्तोऽपि असति चष भक्षणे च चाष चेषतुः चेषु अचाषीत् अचषीत् अचषिष्ट छष हिंसायाम् छषति छषते चच्छाष चच्छष
अच्छाषीत् अच्छषीत् अच्छषिष्ट झष आदानसम्वरणयोः झषति जझाष अझाषीत् अझषीत् अझषिष्ट भ्रस म्लस अदने बभ्रसे अभ्र
सीत् अभ्रसिष्ट। दासृ दाने। दासते ददासे माह माने ममाह ममाहे अमाहीत् अमाहिष्ट इत्युभयपदप्रक्रिया ऋत जुगुप्सायां कृ
पायां च ऋतेरीयङ् स्वार्थेऽनपित्त्वात् ऋतीयते ऋतीयेते ऋतीयन्ताम् ऋतीयाञ्चक्रे ऋतीयिषीष्ट ऋतीयिता ऋतीयिष्यते आ
र्तीयिष्यत आनर्त अर्त्तीत् अर्तिता अर्तिष्यति आर्तिष्यत् आर्तीत् आर्तीयिष्ट इति भ्वादिप्रक्रिया अद भक्षणे अदादेर्लुक् अपः अत्ति अत्तः अद
न्ति अत्सि अत्थः अत्थ अद्मि अद्वः अद्मः अद्यात् हुसाद्धिर्हेः हुसाद्धकाराच्च परस्य हेर्द्धिर्भवति अद्धि अत्तात् अत्तम् अत्त अदुदादेरट् अदा
रुदादेश्च परयोः दिप्सिपोडागमः आदत् आदः अदस्सि सपो घस्लृ लिटि तु वा जघास गमां स्वरे घसादेश्यः जक्षतुः जघसिथ जक्षथुः
जक्ष आद आदुः आदिथ अत्ता लृदित्वात् ङः अघसत् प्सा भक्षणे प्साति प्सायात् प्सातु अप्सात् आदन्ताद्विभोर्लङो ङस् वा अप्सुः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अप्सात् पसो आतो ःनपिपस्तुः स्यात् सेयात् अप्सासीत् मामाने माति अमात् अमुः अमात् ममौ मेयात् अमासीत् रादाने राति लादा
न ग्रहणयोः लाति ललौ अलासीत् श्रा पाके श्राति श्रायात् श्रेयात् दाप् लवने दाति ददौ दायात् अदासीत् ख्या प्रकथने ख्याति चख्यौ अस्य
ति वक्ति रख्याति भ्यो ह्लो लुडि सेरप वादः अख्यत् द्रा कुत्सायाम् द्राति द्रेयात् द्रायात् अद्रासीत् पा रक्षणे पाति पपौ पायात् अपासीत् भा
दीसौ भाति बभौ स्ना शौचे स्नाति स्नायात् स्नेयात् वश कान्तौ वष्टि उष्टः उशन्ति वक्षि उष्ठः उष्ठ वश्मि उश्वः उश्मः उश्यात् वष्टु उष्टात् उष्टाम् उ
शन्तु उड्ढि उष्टात् उष्टाम् उष्ट वशानि वशाव हिंस्यार्हसात् हसान्त्यर्यो हिं स्थिपाल्लोपः अवट् अवड् औष्टाम् औशन् अवट् अवड् औष्टम् औष्ट
औश्व औश्म उवाश ऊशतुः उवशिथ उश्यात् वशिता अवाशीत् अवशीत् हन हिंसागत्योः हन्ति लोपस्त्वनुदात्ततनाम् अनुदात्तानाम्
नानान्तदादीनाम्वनतेश्च गमस्यलोपो भवति कसेड्डिः निह कारेचहतः घ्नन्ति हन्यात् हन्तु हतात् हताम् भन्तु जहो धिश्राधि हन्ते र्जहि रेत
रेधिः शास्ते शाधि निपात्यते हि विषये जहि हनानि अहन् अहताम् अघ्नन् पूर्वाह्न्तेहेस्य घः जघान जघ्नतुः जघ्नुः जघनिथ जघन्थ ह
नो लुड्लिङोर्वधोलुड्याति वा वध्यात् हनिष्यति अवधीत् युमिश्रणे अमिश्रणे च ओरोडकारस्याः हि रुक्तस्योकारो भवत्त्वादौपि
तिल्सियोति युनः युवन्ति योषि योमि युवः युयात् योतयुहि अयौत् अयोः युयाव युयविथ पूयात् यविता अयावीत् तुगति वृद्धि हिंसासु तुरु
स्तुभ्योः हि रुक्तभ्यो ह सादीनां च तुणो मीड्डातो नितवीति तुनः तुवीनः तुवन्ति नोषि नवीषि तुथः तुवीथः तुथ तुवीथ तौमि नवीमि तुयात् तुवी
यात् नौतु नवीतु तुवीतात् तुवीतात् इत्तनात् तुताद् तुहि तुवीहि अनौत् अनवीत् तुताव नोता नोष्यति अनौषीत् रुशब्दे रौति रवीति रुरविथ अ
रावीत् गुस्तुतौ नौ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
तिनुनः नुनाव नुनविथ अनावीत् टुक्षुशब्दे क्षौति क्षुयात् क्षौतु अक्षैात् चुक्षाव चुक्षविथ क्षविता अक्षावीत् क्ष्णु तेजने क्ष्णौति चुक्ष्णविथ अक्ष्णा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीत् स्तुप्रस्त्रवणे स्तौति सुष्णाविथ अस्तावीत् द्रु अभिगमने द्रवति दुद्रविथ दुद्रोथ अद्रोषीत् षु प्रसवैश्वर्ययोः सौति सुषाव सुषविथ
सुषोथ आसौषीत् कु शब्दे कौति चुकविथ चुकोथ अकौषीत् वीइ गतिव्याप्तिप्रजनकान्त्यसनखादनेषु वेति वीतः वियन्ति वेषि वेत्तु वीहि
अवेत् अवियन् विवयिथ विवेथ अवैषीत् एति इतः इयात् एतु ऐयन् आयम् अयाञ्चकार एता ऐषीत् इण् गतौ एति इतः इणः ङ्कि· नि स्व
रेयः यन्ति एषि इयात् एतु यन्तु इहि आयम् ऐव ऐम इयाय। इणः किति णो दीर्घः ईयतुः ईयुः इयथि इयेथ ईयात् एता ॰ ादेः प
इणः सिलोपगा अगात् अगाताम् अगुः इक् स्मरणे इङ्कावध्युपसर्गतो न व्यभिचरतः अध्येति अधीतः अधियन्ति अध्येत अध्येइ इण्व
दिकः अधीयाय अधीयतुः अधीयिथ अधीयेथ अधीयिव अधीयात् अध्येता अध्यगात् विद ज्ञाने वेत्ति वित्तः विदन्ति वेत्सि वित्थः वित्थ वे
द्मि विदो नवानान्त्यादीनां णवादिर्वा विदः परेषान्त्यादीनां नवानां णवादिर्नवकोवा वेद विदतुः विदुः वेत्थ विदथुः वेद विद्व विद्यात् वेत्तु वि
द्धि वेत्तेर्लोट्याद्गुणाभावः करोत्यनुप्रयोगश्च वा तन्नादेः रूपं विदाङ्करोतु ङि त्यङः कञो णः उत ङिति विदाङ्कुरुतात् विदाङ्कुर्वन्तु अवेत् अ
वेद स्याविदः अविदुः दः सः पदान्ते दस्य सो वा सिपि अवेः अवेद् ॰ अवेत् आमि वेदेर्न गुणः विदाञ्चकार अवेदीत् अस भुवि अस्ति नमसो
ऽस्य मूलयस्य नमोऽस्ते श्चाकारस्य लोपो ङिति स्तः सन्ति सिसः अस्ते सस्य लोपो भवति सादौ असि स्थः स्थ अस्मि स्वः स्मः स्यात् अस्तु तु स
न्तु नहि धिरोधि एधि असानि अस्तेरीट् विद्यमानादस्तेः रुदादेश्च परेयो दिप्सिपो रीट् आसीत् आस्ताम् आसीः आसम् अस्तेरनपि भूः बभू
व इत्यादि सिद्धम् मृजूष् शुद्धौ मृजेर्वृद्धिः किति स्वरे वा मार्ष्टि मृष्टः मृजन्ति मार्जन्ति मार्क्षि मृज्यात् मार्ष्टु मृड्ढि मार्जानि अमार्ट् अमार्ड् ममा
र्ज ममृजतुः ममार्जतुः ममार्जिथ ममार्ष्ठ मृज्यात् मार्जिता मार्ष्टा अमार्जीत् वच परिभाषणे वक्ति नहि ॰ वचिरन्तिपरः वक्ति वक्थः व
च्मि वच्यात् वक्तु वग्धि अवक् अवग् उवाच ऊचतुः उवचिथ उवक्थ उच्यात् वक्ता वक्ष्यति अवक्ष्यत् अस्यति वक्तीति ङः ङ· वचेरुम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सि॰ च॰ ५ १०

अवोचत् अवोचताम् अवोचन् रुदिर् अश्रुविमोचने रुदादेर्भ्यश्चतुर्णां ह्स्वादेः परस्यतिवादिचतुर्णामभ्येहकारवसादेःप्रत्ययस्येट्‌रोदि
तिरुदितःरुदंतिरोदिषिरुदिथःरुदिथरुद्यात्‌रोदितुरुदिहिअरोदीत् अरोदत् अरुदिताम् अरुदन् इरितोवाअरुदत् ञिष्वप्‌शयेस्वपितिस्व
प्यात्स्वपितुअस्वपीत् अस्वपत् सुष्वापस्वप्ताअस्वाप्सीत् श्वस प्राणने श्वसितिश्वस्यात् श्वसितु अश्वसत् शश्वास अश्वसीत् अनप्राणने अनिति
प्रादेरेफादनितेनस्यणत्वम् प्राणितिप्राणिहि आनीत् आनत् आन आनतुः अन्यात् अनिता आनीत् जक्षभक्षहसनयोः जक्षितिजक्षितःजक्षादयो
ऽदनउस् जक्षजागृदरिद्राशासचकासष्भ्यः परस्यान्तोऽत अनउस् उसिगुणःजक्षतिजक्ष्यात् जक्षितु जक्षिहि अजक्षीत् अजक्षन् जक्षिता इतिरुदादयः।
जागृनिद्राक्षये जागर्तिजागृतःजाग्रतिजागृयात् जागर्तु अजागः अजागृताम् अजागरुः जजागार जागर्तेर्वाणङ्किङ्किन्नेषुगुणःजजागरतुःजजा
गरुः जजागरिथ जागरांचकार जागर्यात् जागरिता जागरिष्यति अजागरिष्यत् अजागरीत्।दरिद्रादुर्गतौ दरिद्राति दरिद्रातेरितालोपश्चङ्किति दरि
द्रातेरानोलोपोङिति स्वरे इकारश्चङ्किति हसे दरिद्रितः दरिद्रतिदरिद्रियात् दरिद्रातु अदरिद्रात् अदरिद्रिताम् अदरिद्रुः दरिद्रातेरनप्यालोपसौ
वाण्वुण अनिट्‌सणुट्सुन दरिद्रौ ददरिद्रतुः दरिद्रांचकार दरिद्र्यात् दरिद्रिता अदरिद्रीत् अदरिद्रिष्टाम् अदरिद्रासीत् शासु अनुशिष्टौ शास्ति
शास्तेरिःशासेरातो हसे क्ङिति ङे चइइत्वतिशादेष्यःशिष्टःशासतिशास्सिशिष्ठः शिष्ठशास्मिशिष्यात् शास्तु जहो धिशाधि शाधि थिदिपि
धातोस्सस्य तःस्याहि पि अशाद् अशिष्टाम् अशासुः सिपिवाधातोस्सस्यवातःस्यात्तिपि अशाः अशाद् अशात् अशाः शशास शिष्यात् शासि
ता अशासिष्यत् अशिषत्।चकासृदीप्तौ चकास्ति चकास्तः चकासति हसाद्धिर्हेर्धेसलोपःचकाधि अचकात् अचकासुः अचकाः अचकात् अ
चकाद् चकासांचकार अचकासीत् इतिपरस्मैपदम् चक्षिङ् व्यक्तायांवाचि स्कोराद्योश्च चष्टे चक्षाते आतोऽन्तोदनतः चक्षते चक्षे चक्षाथे च
ड्ढ्वे चक्षे चक्ष्वहे चक्ष्महे चक्षीत चष्टाम् अचष्ट चक्षिङोऽनपि ख्याञ् क्शाञो णादौ तु वा चख्यौ चख्यतुः चख्ये चख्याते चक्शौ चक्शे चचक्षे

राम १०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यात् स्यायात् स्यासीष्ट कृ शायात् क्सेयात् अस्मत् अस्मत अकृ शास्तई र गतौ कम्पने च ईर्ते ईर्ताम् ईराताम ऐर्त ईरांचक्रे ईरिषीष्ट ऐरिष्ट।
श्वाङ् ध्यासु इच्छायाम आशास्ते आशाशासे आशासिष्ट कृ सिगति शासनयोः कंस्ते कंसाते अयम निदि दिस्येकेक स्ते तालव्यान्तो ऽप्यनिदित क
ष्टक शाते कंसक ह्रु अकशिष्ट णि सित्वुम्बने निंस्ते निंसाते निंस्से निंसितापि जिशुड्डौ चौक्कुः णिंक्ते निंक्षे निंजितापि जि अव्यक्ते शब्दे शिंक्ते शिंक्षे शिंजिता
पि जिवर्णे सम्पर्चने च पिङ्क्ते पिपिंजे पिजिताष्ट जि संपर्चने च पृङ्क्ते पपृंजे पृंजिता पृचीसम्पर्चने पृक्ते पपृचे अप विष्ट ईड स्तुतौ ईट्टे ईडीशिभ्यां सध्वयो
रिट् ईडिषे ईडिध्वे ऐडुं लङो ध्वस्य नेट् ऐड्ढ्वम ईडांचक्रे ऐडिष्ट ईशऐश्वर्ये ईष्टे ईशिषे ईशिध्वे ईशांचक्रे ईशिता से आस उपवेशने आस्ते आध्वे आस
चक्रे वस आच्छादने वस्ते वस्से अवसिष्ट षू ङ् प्राणिगर्भ विमोचने सूते तु धातोः सुवाने सूताम सुवीन गुण स्सूतः ते सुवावहे सुषुवे सविषीष्ट सोषीष्ट
स विता सोता शीङ् स्वप्ने शीङः। शीङो गुण स्यातु शेते शयाते शीङो ऽन्तो रुट् शीङः परस्यान्तो रुडागमः शेरते शेताम अशेत अशेरत शिष्ये अश
यिष्ट इङ् अध्ययने अधिपूर्वः अधीते अधीयाते अधीयीत अधीताम् अध्यै अध्यैत अध्यैपाताम् इङो णाद्वेगाङ्अधिजगे अध्यैषीष्ट इङ्वा गी
लुङ् लङोर्गेणा भावश्च अगीष्यत अध्यैष्यत अध्यगीष्ट अध्यैष्ट इत्यात् द्विष अप्रीतौ द्वेष्टि द्विषः द्वेक्षि द्विड्डि अद्वेट् अद्वेड् अद्विषाम अद्विषुः अद्विष
न् दिद्वेषिथ द्विषीष्ट अद्विक्षत् दुह प्रपूरणे दोग्धे: तयोर्धः दोग्धि दुग्धः दुह निधो सिद्दुग्धे दोग्धुं दुग्धि दी हानि अधोक् अधोग डदोहद्धक्षीष्ट अधु
क्षत् अदुग्ध अधुक्षत अधुक्षाताम अदुग्धाः अधुक्षथाः अदुग्ध्वम् अधुक्षध्वम अदुह्वहि अधुक्षावहि। दिह उपचये देग्धि लिह आस्वादने लेढि
लीढः ष्टुञ् स्तुतौ स्तौति स्तवीति स्तुतः स्तुवीतः स्तुवन्ति स्तोषि स्तुवीषि स्तुने स्तुवीते स्तुवीषे अस्तौत् तुष्टाथ तुष्टुव तुष्टुवे अस्तौषीत् स्तुसु धूञ्शांपे सेटि अस्तावी
त् अस्तोष्ट ब्रूञ् व्यक्तायां वाचि अभवादौ पिति त्सिम ब्रूञ ईट् मसयोः वा रौपिति त्सिम ब्रवीति ब्रूतः ब्रुवन्ति ब्रूव आह आह पंचानाम् ब्रूवः परेषां पंचानां तिबादीनां
णवाद यः पंचादेशा वा स्युः ब्रुव आहस्य आह आहतुः आहुः नः स्थे आहो हस्य तः स्थपरे आह आहथुः ब्रूते अब्रवीत् अब्रवीत ब्रूञो ऽनपि वच उवाच ऊचे अवो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चत् अवोचेताम् अवोचन्त अवोचथाः अवोचेथाम् अवोचध्वम् अवोचे अवोचावहि ऊर्णुञ् आच्छादने ऊर्णोतेर्वा वृद्धिर्हसादौ पिति च ऊर्णौति ऊर्णो
ति ऊर्णुतः ऊर्णुवंति ऊर्णुते ऊर्णुयात् ऊर्णुवीत ऊर्णौतु ऊर्णोतु ऊर्णुहि ऊर्णोतेर्गुणो दिस्योः वृद्ध्यपवादः और्णोत् और्णोः ऊर्णोतेराम्न स्वरादेः परः स्वरादेर्द्वितो
द्वितीया वाडित ऊर्णुनुविथ ऊर्णुनविथ ऊर्णुविता ऊर्णविता ऊर्णोतेर्वा वृद्धिः सेपि परसे वा गुणः और्णावीत् और्णावीत् और्णविष्टाम् और्णावीत् और्णुवीत् और्णुविष्टा
म् और्णविष्ट और्णुविष्ट इत्यदादयः हु दानादनयोः श्लौ द्विः श्लुहु इत्यादेः कृत्स्नस्यापि लुक् धातोः श्लौ द्वित्वम् जुहोति जुहुतः दे: द्विरुक्तात्परस्यान्तो:
त् जुह्वति जुहोषि जुहुथः जुहुथ जुहोमि जुहुवः जुहुमः जुहुयात् जुहोतु हेर्द्धिः जुहुधि अजुहोत् अनउस् द्विरुक्तादनउस् उसि गुणः अजुहवुः जुहाव
भीह्रीभृहुवा साम्वा सत् लुग्वत् जुहवांचकार येहु यात् होता होष्यति अहौषीत् ञिभी भये बिभेति ङिति हसे भीह्रोका रिङ्वा बिभीतः बिभितः बिभ्यति बिभी
यात् बिभियात् बिभेतु बिभीतात् बिभितात् अबिभयुः बिभयांचकार बिभाय अभैषीत् ह्री लज्जायाम् जिह्रेति अजिह्रयुः जिह्रयांचकार जिह्राय ह्रीया
त् ह्रेता अह्रैषीत् पॄ पालनपूरणयोः ऋमोरिः पूर्वस्य ऋमोः पूर्वस्यात् इत् लुकि पिपर्ति पोरुः पवर्गाद्वकाराच्च ऋत उत् अगुणवृद्धौ भसे ये ध्वोर्विहसे
पिपूर्त्तः पिपुरति पिपूर्यात् पिपर्त्तु पिपूर्तात् पिपूर्ताम् पिपुरतु द्विस्योर्हसात् अपिपः पपार पपरतुः पपरिथ पूर्यात् परिता परीता परिष्यति परीष्यति
अपारीत् पृ पालनपूरणयोः पिपर्ति पिपृतः पिप्रति पिपृयात् पिपर्त्तु पिपृतात् पिपृताम् पिप्रतु पिपृहि पिपृतात् पिपृतम् पिपृत पिपराणि पिपराव
पिपराम अपिपः अपिपृताम् पपार पप्रतुः पप्रुः पपर्थ प्रियात् पर्त्ता परिष्यति अपरिष्यत् अपार्षीत् अपार्ष्टाम् ओहाक् त्यागे जहाति इत्सलो द्विरुक्तस्य
धातोरातो लोपः ङिति स्वरे ईकारश्च ङिति हसे जहीतः जहितः जहति जहातेः यादावालोपः जह्यात् इर्वा हौ जहातेर्हौ परे इकार ईकारश्च वा जहि
हि जहीहि जहाहि अजहात् अजहिताम् अजहीताम् अजहुः जहौ दादेरेर्हे यात् अहासीत् ऋ गतौ असवर्णे स्वरे इयृपर्त्ति इयृतः इय्रति इयृयात्
इयर्त्तु ऐयः ऐयृताम् ऐयरुः आर आरतुः आरुः अत्यर्ति स्वयतीनामितीट् आरिथ आरत् सृ गतौ ससर्त्ति ससर्थ स्त्रियात् असरत् इति पम् ओहाङ् गतौ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भृञांलुक्किङु भृञ् हाङ् मा ङाम्पूर्वस्यात इत लुक्कि जहीते जिहाते जिहते जहे अहास्त माङ् माने मिमीते ममे अमास्त इत्यात् ङ भृञ्
धारणपोषणयोः बिभर्ति बिभृतः बिभ्रति बिभृयात् बिभर्तु अबिभः बिभरांचकार बभर्थ बभृव बभृम बभ्रे बभृद्वे भृषीष्ट अभार्षीत् अभृत
डुदाञ् दाने ददाति दादेः द्विरुक्तानामपि दाधामातो लोपोङिति दत्तः ददति ददते ददातु दाहि अपि दाधामेत्व पूर्वस्य च लोपो हौ देहि स्म
दद्यात् ददौ ददिथ ददाथ देयात् अदात् अदित अदिषाताम् धाञ् धारणपोषणयोः दधाति पूर्वस्य ङिति म्से धः धाञः पूर्वस्य दका
रस्य धो भवति ङिति म्से परे धत्तः दधति धेहि धत्तात् धेयात् अधात् अधित अधिषाताम् णिजिर् शौचपोषणयोः निजां गुणः णिजिविजिवि
षां पूर्वस्य गुणो लुक्कि नेनेक्ति नेनिक्तः नेनिजति नेनेक्षि नेनिक्थ नेनिज्यात् नेनेक्तु नेनिग्धि इद्ः स्वरे पिनोपधाया गुणः द्विरुक्तस्य धातोरपि
विषये स्वरे परे उपधाया गुणो न नेनिजानि अनेनेक् अनेनेग् निनिजिथ निनेज निनिजे निक्षीष्ट अनिजत् अनैक्षीत् अनैक्ताम् अनि
क्त विजिर् पृथग्भावे वेवेक्ति विवेजिथ विक्षीष्ट अविजत् अवैक्षीत् अविक्त विष्लृ व्याप्तौ वेवेष्टि विवेष विविषे विक्षीष्ट अविषत् ननिहस्व
षां नाम्नां अविक्षत अविक्षाताम् अविक्षन्त उभयपदप्रक्रिया इति ह्वादयः दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्व
प्नकान्तिगतिषु दिवादेर्ग्यः कर्त्तरि चतुर्षु श्नपोऽपवादः प्वोर्विहसे दीव्यति दीव्येत् दिदेव दीव्यात् अदेवीत् षिवु तन्तुसन्ताने सीव्यति सिवा
हेरड् व्यवायेवा षः न्यषेवीत् न्यसेवीत् सिवु गतिशोषणयोः सीव्यति सिसेव ष्ठिवु निरसने ष्ठीव्यति ष्णुसु अदने आदाने दर्शने च ष्णुस्यति सस्नु
निरसने स्नस्यति क्नसु कौटिल्ये दीप्तौ च चक्नास शिश्र अक्नासीत् अक्नसीत् शुष शुष्यति शुशोष विव्याधन नृती गात्रविक्षेपे नृत्यति ननर्त ननृते
नर्त्स्यति नर्तिष्यति नृत्येति अनर्तीत् त्रसी उद्वेगे भ्राश भ्लाश इति वायः त्रस्यति त्रसति तत्रास त्रेसतुः तत्रसतुः
कुथ पूतीभावे कुथ्यति चुकोथ पुथ हिंसायाम् पुथ्यति अपोथीत् गुध परिवेष्टने गुध्यति अगोधीत् क्षिप प्रेरणे क्षिप्यति क्षिप्ता अ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्ष्वेसीत् पुष्प विकसने पुष्प्यति पुपुष्प तिम तीम ष्टीम आर्द्रीभावे तिम्यति स्तीम्यति तितेम तिष्टीम ब्रीड लज्जायाम् ब्रीड्यति विव्रीड इष
गतौ इष्यति इयेष ईषतुः एषिता एष्टा ऐषीत् षह षुह चक्यर्थे सह्यति ससाह सेहतुः सेहुः असहीत् सुह्यति जॄ झॄ वयोहानौ जीर्य्य-
ति जजार जजरतुः जेरतुः जीर्य्यात् जरिता जरीता ऋवर्णदृशोरित्यनेन गुणः अजरत् अजारीत् झीर्य्यति जझार झेरतुः अझारीत् शो तनूकरणे ओतः
श्यनि परे धातोरोतो लोपः श्यति शशौ शाता अशात् अशासीत् छो छेदने छ्यति अच्छात् अच्छासीत् षो अन्तकर्म्मणि स्यति सयात्
असात् असासीत् दो अवखण्डने द्यति दयात् अदात् राध साध संसिद्धौ राधोऽकर्म्मकाद्वृद्धावेव राध्यति रराध रराधिथ रराद्ध रात्स्यति अरात्सीत्
व्यध ताडने ग्रहादिकित्वाच्च विध्यति विव्याध विविधतुः विव्यधिथ विव्यद्ध व्यद्धा अव्यात्सीत् पुष पुष्टौ पुष्यति पुपोष पुपोषिथ पोष्टा पोक्ष्यति पु-
षादित्वात् ङः अपुषत् शुष शोषणे शोष्टा शोक्ष्यति अशुषत् तुष तुष्टौ तोष्टा तोक्ष्यति अतुषत् दुष वैकृत्ये दोष्टा अदुषत् श्लिष आलि-
ङ्गने श्लेष्टा आलिङ्गने श्लिषः क्सः अपवादः। अश्लिक्षत् कन्यां चैत्रः अनालिङ्गने तु समश्लिषत् जतु काष्ठम् षिदा गात्रप्रस्रवणे स्वेदा।
अस्विदत् क्रुध क्रोधे क्रोद्धा अक्रुधत् क्षुध बुभुक्षायाम् क्षोद्धा अक्षुधत् शुध शौचे शोद्धा अशुधत् षिधु संराद्धौ सेद्धा असिधत् रध हिंसा-
याम् रध्यति ररन्ध ररन्धतुः ररन्धिथ ररन्धिव ररन्धिम रेध्म लिडुच्चितेट् रधिजभोरचि रधिता रद्धा रधिष्यति रत्स्यति अरधत् णश अ-
दर्शने नश्यति ननाश नेशतुः नेशिथ ननंष्ठ नेशिव नेश्व नेशिम नेश्म नशिता नंष्टा नशिष्यति नङ्क्ष्यति अनशत् तृ-
प प्रीणने तृप्यति ततर्प ततर्पिथ ततर्प्थ ततृपिव तर्पिता त्रप्ता तर्प्ता तर्पिष्यति त्रप्स्यति तर्प्स्यति अतृपत् अतर्पीत् अत्राप्सीत् अतार्प्सीत् दृप हर्षमोचनयोः
दृप्यति अद्राप्सीत् अदृपत् द्रुह जिघांसायाम् द्रुह्यति दुद्रोहिथ दुद्रोढ दुद्रोग्ध दुद्रुहिव दुद्रुह्व दुद्रुहिम दुद्रुह्म द्रोहिता द्रोग्धा द्रोढा द्रोहिष्यति
ध्रोक्ष्यति अद्रुहत् मुह वैचित्त्ये मुह्यति मुमोहिथ मुमोढ मुमोग्ध ष्णुह उद्गिरणे स्नुह्यति सुष्णोहिथ सुष्णोढ सुष्णोग्ध ष्णिह प्रीतौ सिष्णेहिथ सिष्णेढ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्धेर्ध्य शमु उपशमे शमां दीर्घः शमादीनां दीर्घः कर्त्तरि श्ये शाम्यति शमिता अशमत् तमु काङ्क्षायाम् ताम्यति तताम तेमतुः अतमत् दमु
शमनायाम् दाम्यति देमतुः अदमत् श्रमु तपसि खेदे च श्राम्यति शश्राम शश्रमतुः अश्रमत् भ्रमु अनवस्थाने भ्राम्यति भ्रमति बभ्राम भ्रेमतुः
बभ्रमतुः अभ्रमत् क्षमू सहने क्षाम्यति चक्षमिथ चक्षंथ अक्षमत् क्लमु ग्लानौ भ्राशभ्लाशेति यो वा क्लाम्यति ष्ठिवुक्लम्वाचमां दीर्घोऽपि।
क्लामति मदी हर्षे माद्यति ममदिथ अमदत् शमादयोऽष्टौ असु क्षेपणे अस्यति अस्येत् आस आसतुः आसिथ अस्यतेस्थुक् ङे आस्थत् यसु प्र
यत्ने अनुपसर्गाद्य सस्समूर्वाच्च यो वा यस्यति यसति संयस्यति संयसति ययास येसिथ अयसत् उपसर्गे प्रयस्यति जसु मोक्षणे जस्यति जजा
सजेसिथ अजसत् तसु दसु उपक्षये तस्यति दस्यति ददास देसिथ अदसत् वसु स्तम्भे वस्यति ववास ववसतुः अवसत् विस प्रेरणे विस्य
ति विवेस अविसत् कुश संश्लेषणे कुश्यति चुकोश कोशिता अकुशत् वुस उत्सर्गे वुस्यति वुवोस वोसिता अवुसत् मुस खण्डने मुस्य
ति मोसिता अमुसत् मसी समीपरिणामे मस्यति मेसिथ अमसत् लुठ विलोडने लुठ्यति लोठिता अलुठत् उच समवाये उच्यति उवोच
ऊचतुः औचत् भृशु भ्रंशु अधःपतने भृश्यति बभर्शिथ अभृशत् भ्रश्यति बभ्रंश अभ्रशत् वृश वरणे वृश्यति ववर्शिथ अवृशत् कृश तनू
करणे कृश्यति चकर्शिथ अकृशत् ञितृष पिपासायाम् तृष्यति ततर्षिथ अतृषत् हृष तुष्टौ हृष्यति जहर्षिथ अहृषत् रुष रिष हिंसायाम् रु
ष्यति रोषिता रोष्टा अरुषत् रिष्यति रेषिता रेष्टा अरिषत् डिप क्षेपे डिप्यति अडिपत् कुप क्रोधे कुप्यति अकुपत् गुप व्याकुलत्वे गुप्यति अगु
पत् युप रुप लुप विमोहने युप्यति युयोपिथ अयुपत् रुप्यति रुरोपिथ अरुपत् लुप्यति लुलोपिथ अलुपत् लुभ आकाङ्क्षायाम् लुभ्यति।
लुलोभ लोभिता लोब्धा अलुभत् क्षुभ सञ्चलने क्षुभ्यति चुक्षोभ अक्षुभत् क्लिदू आर्द्रीभावे क्लिद्यति चिक्लेद क्लेदिता अक्लिदत् ञिमिदा स्ने
हने मिद्यति गुणो ये मेद्यति मिमेद मिद्यात् अमिदत् ञिक्ष्विदा स्नेहनमोचनयोः क्ष्वेदिता अक्ष्विदत् ऋधु वृद्धौ ऋध्यति आर्धत् आनर्द

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सि॰ चं॰ उ॰ ९२

ऋध्यात् आर्द्धत गृधु अभिकाङ्क्षायाम् गृध्यति जगर्द्ध अगृधत् इति पुषादयः इति परस्मैपदम् षूङ् प्राणिप्रसवे सूयते सुषुवे सुष
विषे सविता असविष्ट दूङ् परितापे दूयते दुदुवे दविता अदविष्ट दीङ् क्षये दीयते दीङो युडचि क्ङिति स्वरस्य दिदीये मीनाति मिनोति
दीङां गुणवृद्धिविषये क्यपि चात्त्वम् दासीष्ट दाता दास्यते अदास्त डीङ् विहायसा गतौ डीयते डिड्ये डयिता अडयिष्ट धीङ् धारणे धीयते
दिध्ये दिध्यिषे अधेष्ट मीङ् प्राणवियोगे मीयते मेता रीङ् स्रवणे रीयते रिर्ये अरेष्ट लीङ् श्लेषणे लीयते लिल्ये लीलीङोरात्त्वं वा गुण
वृद्धिविषये क्यपि च लाता लेता अलास्त अलेष्ट व्रीङ् वरणे व्रीयते विव्रियिषे व्रेष्यते अव्रेष्ट स्वादय ओदितः पीङ् पाने पीयते अपेष्ट माङ् माने
मायते ममे अमास्त अमासाताम् ईङ् गतौ ईयते अयाञ्चक्रे प्रीङ् प्रीतौ प्रीयते पिप्रिये अप्रेष्ट जनी प्रादुर्भावे ज्ञाजनोर्जा कर्तरि चतुर्थे जाय
ते गमहनजनेति जज्ञे जनिता दीपजनेति इण् जनिवध्योश्चेति न वृद्धिः अजनि अजनिष्ट तूरी गतित्वरणहिंसनयोः तूर्यते तुतूरे धूरी दीपी दीप्यते अदी
पि अदीपिष्ट पूरी आप्यायने अपूरि अपूरिष्ट तप ऐश्वर्ये तप्यते तेपे तप्ता अतप्त वावृतु वरणे वावृत्यते ववावृते वावर्तिता पद गतौ पद्यते पेदे पत्ता
पदेरिण् तनि अपादि अपत्साताम् खिद दैन्ये खिद्यते खेत्ता विद सत्तायाम् विद्यते वित्सीष्ट वेत्ता अवित्त बुध अवगमने बुध्यते भुत्सीष्ट दीपजनेति इण् अबो
धि अबुद्ध युध संप्रहारे युध्यते युयुधे युत्सीष्ट अयुद्ध अनोरुध कामे अनुरुध्यते अनुरुरुधे अनुरुत्सीष्ट अनुरोद्धा अन्वरुद्ध मन ज्ञाने म
न्यते मेने मन्ता अमंस्त युज समाधौ युज्यते योक्ता अयुक्त सृज विसर्गे सृज्यते रारोभ्रस्जेरशाम् स्रष्टा असृष्ट असृक्षाताम् लिश अ
ल्पीभावे लिश्यते लिक्षीष्ट लेष्टा अलिक्षत अलिक्षाताम् इत्यात्मनेपदम् मृष तितिक्षायाम् मृष्यति मृष्यते ममर्ष ममृषे अमर्षीत् अमर्षिष्ट ईशुचि
र् क्लेदने शुच्यति शुच्यते अशुचत् अशोचीत् अशोचिष्ट रञ्ज रागे अपि रञ्जदंशोरिति नलोपः रज्यते रज्यति अराङ्क्षीत् अरङ्क्त शप आ
क्रोशे शप्यति शप्यते शेपतुः शेपिथ शप्ता अशाप्सीत् अशप्त शक मर्षणे शेकिथ शशाक शक्यति पुषादित्वादङ् अशकत् अशक्त सेडयमि

राम ९२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्येकेशक्तिताणहवन्धनेनह्यतिनह्यतेनेहिथननद्धनत्सीष्टनद्धाअनात्सीत् अनद्ध इति दिवादयः षुञ् अभिषवे २६ स्वादेर्नुः कर्तरि चतुर्थे
नूपः नुमस्त्यस्य उपसस्य यस्य गुणो भवति पिति सुनोति सुनुते ओर्वा लोपः सुन्वः सुनुवः सुनोतु ओर्वाहेः सुनु सुनवानि सुनवै असुनोत् अ
सुनुताम् सुषाव सुषुवतुः सोषीष्ट असावीत् स्तुसुधूञ्भ्यः परस्मैपदे सिचि इट् असोष्ट षिञ् बन्धने सिनोति सिनुते सिष्यसिष्याते असैषीत् असेष्ट शिञ् नि
शाने शाता अशात् अशैषीत् डुमिञ् प्रक्षेपे मिनोति मिनाती त्यात्वम् ममौ मिम्यतुः ममिथ ममाथ मिमिम्य अमासीत् अमास्त चिञ् चयने चि
नोति चिनोतेस्सणादौ किवा चिकाय चिचाय चिच्यतुः अचैषीत् अचेष्ट स्तृञ् आच्छादने स्तृणोति स्तृणुतः स्तृण्वन्ति न स्तार गुणोर्ति संयोगा
द्योः तस्तरतुः ऋदनात्स्थयोनेट् तस्तर्थ तस्तरे स्तर्यात् ऋदनात्संयोगादेः सिस्यार्लिङ्गात् स्तरिषीष्ट स्तृषीष्ट अस्तारीत् अस्तरिष्ट अस्तृत लोपाङ्गस्य
अमसे कृञ् हिंसायाम् कृणोति कृणुते चकर्थ चकृवहे अकार्षीत् अकृत वृञ् वरणे ववार ववृतुः वृञः थलि इट् ववरिथ वृङ्वृञ् ऋदनात्सिस्यार्लिङ्
वरिषीष्ट वृषीष्ट वरिता वरीता वरिष्यति वरीष्यति अवारीत् अवारिष्टाम् अवरिष्ट अवरीष्ट अवृत धुञ् कम्पने धुनोति धुनुते दुधाव दुधुवतुः धोष्यति अ
धोषीत् अधोष्ट दीर्घान्तोयम् धूनोति स्तुसुधूञा मितीट्। अधावीत् स्वरतिसूतीति वेट् अधविष्ट अधोष्ट टुदु उपतापे दुनोति दुदा
व दुदुवतुः अदौषीत् हि गतौ वृद्धौ च हिनोति पूर्वाद्धिनोतेर्हेस्य घोनत्वं जिघाय जिघ्यतुः अहैषीत् आप्लृ व्याप्तौ आप्नोति आप्नुवन्ति आप्नुहि आ
प आपतुः आप्ता आपत् शक्लृ शक्तौ शक्नोति शशाक शेकतुः शक्ता अशकत् राध साध संसिद्धौ राध्नोति राध्नुवन्ति राधो हिंसायामेत्वपूर्वलोपौ किति लि
टि सेटि थलि च रराध रेधतुः रेधिथ अरात्सीत् ञिधृषा प्रागल्भ्ये धृष्णोति दधर्ष अधर्षीत् दम्भु दम्भे दभ्नोति श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा दम्भे
लिटः कित्त्वपूर्वलोपौ ददम्भ देभतुः ददम्भतुः देभिथ ददम्भिथ अदम्भीत् ऋधु वृद्धौ आनर्द्ध नुगशाम् आनृधतुः अर्द्धिता क्षि हिंसायां क्षिणोति क्षिण्वन्ति क्षे
ता॥ ८ ॥ इति पञ्च अशूङ् व्याप्तौ संघाते च अश्नुते नुगशाम् आनशे अशिषीष्ट असीष्ट अशिता अष्टा अशिष्ट आष्टाताम् ष्टिघ आस्कन्दने स्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

